# ग्रन्थरत्नमाला

श्रीअभिनवकालिदासविरचिता

## भागवतचम्पूः ।

कल्याणं नः प्रभूतं कलयतु ललितालापशैलेशबाला
लीलाजालानुकूला शिशिरकरकला भानुमालाजटाला ॥
एका शेषाहिभूषा परिकलितसुधापूरधारानुकारा
भद्रामुद्रा विनिद्रा पुरहरणविधौ कापि कारुण्यपूर्णा ॥१॥
प्रालेयाचलभागधेयभवनं कल्याणजालास्पदं
जाटाटीशतपःफलं किलकिलल्लीलाशुकाह्लादितम् ॥
बिभ्राणं परिमौलि कंचन सुधाधाराधरं सादरं
तन्मे भद्रसमुद्रमाकलयतादानन्दकन्दं महः ॥ २ ॥
कस्त्वं घोरविलोचनोसि भुजगोत्तंसः कपाली जटी
देव्याः शासनमन्तरेण भगवन्नन्तःपुरं मा गमः ॥
इत्थं द्वारि निवारितं पुरहरं निध्याय दौवारिकै-
र्यन्मातर्विदधासि मन्दहसितं दद्यात्तदिष्टानि नः ॥ ३ ॥

---

१ प्रभूतमतिशयेन । २ ललितो मनोहरः आलापः स्वरो यस्या एतेनाकाशरूपत्वम् एतादृशी शैलेशस्य महेन्द्राचलस्य बाला कन्या । ३ लीला जाले अनेकासु क्रीडासु अनुकूला । एतेन जलत्वम् । ४ शिशिरकराणां या कला तद्रूपा । ५ भानुमाला भानूनां द्वादश. सूर्याणां माला समूहः एताभ्यां तेजस्त्वम् । ६ शेषाहिभूषा शेषसर्पभू[illegible] । ७ प्रालेयाचलो हिम[illegible] [illegible] । णम्[illegible]निरन्तरधारा । [illegible] लः । ८ जाटाटीशः शङ्करः । [illegible] । [illegible] कुम[illegible] [illegible] । १२ महीशस्य [illegible] ण् । ध्शेषः कौपरि । १० प्रार्थन[illegible] [illegible]

अन्योन्यं विजयैषिणोर्विहसतोः सानन्दयोः साहसे
सामोदादितरेतरव्यतिकरादुद्भूतरोमाञ्चयोः ॥
क्षिप्तोत्क्षिप्तकराब्जयोः स युगपन्नव्याक्षतारोपणे
संरम्भः शिवयोरमन्दविभवः श्रेयांसि पुष्णातु नः ॥४॥

भद्रं वपुः कथमिदं छुरितं विभूत्या
वैयाघ्ररोमशबलं वसनं कुतस्ते ॥
श्रुत्वैवमालिपरिहासवचो भवान्याः
श्रेयः स्मितं दिशतु नो नवसंगतायाः ॥ ६ ॥

अभिनवपदपूर्वः कालिदासः प्रगल्भ-
स्त्रिनयनदयितायाः प्रेमडिम्भस्तृतीयः ॥
विरचयति तयैव प्रेरितः प्रेमपूर्वं
हरिगुणपरिणद्धं चारुचम्पूप्रबन्धम् ॥ ७ ॥

केयं मतिर्मम शिशोरगभीरवाचः केयं यदूद्वहकथावचसामभूमिः ॥
तद्वर्णने प्रयतमानहृदः कदापि निर्वर्णितुं निशमितुं च न साहसं मे ८॥

यद्वा दयारसझरीपरिपूरितेन
मन्दारमाल्यनिकुरम्बसहोदरेण ॥
कालीकटाक्षनिकरेण करम्बितस्य
किं दुष्करं मम भवेज्जगतां त्रयेपि ॥ ९ ॥

प्रादुर्भवन्तु सरसानि वचांसि काली-
कारुण्यतो मम मुखादपि नात्र चित्रम् ॥
नैवामृतं स्रवति किं कठिना शिलापि
पीयूषधामकरजालपरिग्रहेण ॥ १० ॥

---

१ परस्परप्रीत्या। २ शिवश्च शिवा च शिवौ तयोः 'पुमान्स्त्रिया' इत्येक-
शेषः। ३ व्याघ्र[illegible] शबलं च। ४ भवान्याः। ५
स्व[illegible] [illegible]युक्तम्। ७ श्रीकृष्ण[illegible]। ८
[illegible] [illegible]ताशिला। ११ सम्प[illegible]

दोषं विमुञ्चत गुणांशमुदारमत्र
सन्तः प्रतीच्छत गुणैकदृशो दयार्द्राः ॥
त्यक्त्वा कलङ्कमनवद्यसुधांशुखण्ड-
मीशो बिभर्ति शिरसा न किमादरेण ॥ ११ ॥

उपक्रम्य स्तोतुं हरिमिह हि वात्स्यायनकथा
मुधा माघादीनामिव कृतिषु नैव प्रकटिताः ॥
गुणैः श्लिष्टाः किं तु प्रतिपदमुदारैर्मुररिपो-
रसाला काप्येषा प्रसरतु सुकाव्यामृतझरी ॥ १२ ॥

कथैकघटनापरैस्त्रिचतुरैरसद्व्यञ्जनैः
कृतिर्मम युता भवेदियमसारपद्यैर्न वा ॥
न तेन सकला तथेत्यरुचिमादधध्वं बुधा
वधारयत यत्नतः प्रतिपदं ध्वनेर्जृम्भणम् ॥ १३ ॥

आसीदसीममहिमा महनीयरूपो रूपानुरूपचरितः सुकृतप्रधानः॥
राजा परीक्षिदभिधो यदजस्रदाननीरैरुपैति मरुभूमिरनूपभावम् १४।

कन्दर्पदर्पशमनाय पुरा पुरारि-
नैटाललोचनभवस्य कृपीटयोनेः ॥
क्रोधानलो रिपुमहीपचमूचमूरु-
पञ्चाननस्य युधि यस्य विवर्तमाहुः ॥ १५ ॥

यस्यातिवेलधवलेष्वखिलार्णवेषु
भासैरमन्दविभवस्य यशःसुधांशोः ॥
श्वेतच्छदाः सलिलदुग्धविभागविद्यां
धन्याममन्यत चिरादितरैर्दुरापाम् ॥ १६ ॥

आश्रित्य जन्मभवनं रिपुभूपतीनां
यस्य प्रतापरविराश्रयनाशमेषाम् ॥

---

१ भागुरिमते उपसर्गाकारलोपः । [illegible] निरन्तरधारा । २ [illegible] महिमा यस्य । ३ महनीयचरित इत्यर्थः । ४ कुम्[illegible] । १२ महीशस्य । ६ चमूरुः हरिणविशेषः । ७ पञ्चाननो सिंहः [illegible] वर्त [illegible]

कृत्वा ततो धनपदाक्रमणं विधाय
तद्विक्रम[1]क्षयवशेन बभूव सौम्यः ॥ १७ ॥

यत्स्वातिवृष्टिजनितानि यशोनिभानि
मुक्ताफलानि दिगधीशकिरीटशाणे ॥
उत्तेजितान्यखिलदिग्वरवर्णिनीनां
हारेन्ति[2] सत्कविगवीगुणगुम्फितानि ॥ १८ ॥

स्मृत्वा यमेव कुरुपाण्डुकुलप्रतिष्ठा-
माचार्य[3]सूनुशरजालनियम्यमानम् ॥
आविश्य कुक्षिकुहरं तरसा जुगोप
चक्रेण शौरिरतिवेलकृपाविशालः ॥ १९ ॥

किं विस्तरेण वचसामधुना य एष
कालेपि हन्तुं[4] कलिपूरुषबृंहणार्हे ॥
प्रावर्तयत्सुकृतमेव पदैश्चतुर्भि
रंहः[5] प्रवृत्तिमनुरुद्ध्य विधिप्रक्लृप्ताम् ॥ २० ॥

स एव परीक्षिदभिधानो राजर्षिराकर्णितविविधमधुसूदनकथाप्रपञ्चस्ततोपि सौहित्यमनधिगच्छन्नाधिगतनिखिलनिगमतत्त्वं तत्त्वविदामग्रेसरमुपशमशास्त्रशाततविषयाविषवृक्षाभिनिवेशमपरिमेयमहिममहितं[6] सुजनैक[7]दृशं दयावन्तं भगवन्तं बादरायणिमद्राक्षीत् । कृतासनपरिग्रहं तं प्रणम्य सविनयप्रवणमप्राक्षीच्च। अयि भगवन्निशमिन्[8] निशामितानि पाण्डुनन्दनप्रशंसामांसलानि जगदुद्भवप्रसङ्गसंगतानि रुचिरमुरभिदवतारलीलानिकरकरम्बितानि[9] ध्रुवपृथुपुरञ्जनचरितभरितानि दक्षाध्वरध्वंसनप्रपञ्चकञ्चुकितानि प्रियव्रतचारित्रवि-

---

१ तेषां शत्रूणां विक्रमस्य क्षयः तद्धेतोः । २ हारन्तिहारइव आचरन्ति । ३ आचार्य सूनुरश्व[illegible]र्हे । ५ पातकप्रवृत्तिम् । ६ महद्भिः पूजितति[illegible] ८ तेजस्विन् । ९ गुक्तानि सन्दृतानिनि ।

चित्रितानि धरणीगोलपरिमितिनिरूपणमुरूपितानि समुद्भ्रदजा-
मिलाद्भुतकेलिकथाचरितकवचितानि वृत्रवधवृत्तान्तसंदोनितानि ज-
गदाह्लादकप्रह्लादकथाकदम्बकन्दलितानि वर्णाश्रमधर्ममर्मसमुदय-
मेदुराणि मकरकरकर्तरीकृतसिन्धुरकथानिबन्धबन्धुराणि दुग्धपयो-
निधिमथनोदन्तदन्तुराणि बलिबलनियमनप्रथितकथानुषङ्गतरङ्गि-
तानि मिहिरहिमकरकुलनरपालगुणगणपरिशीलनशीलितानि भव-
दीयवदनारविन्दनिष्यन्दमानमकरन्दबिन्दुसंदोहायितानि बहुशो-
नन्तश्रुतिसदानन्दवितरणनिपुणानि त्रिविधतापपापापहारापहारि-
तसुधाकरसुरदीर्घिकाकीर्तिवितानानि वचनामृतानि नाम। एवममृता-
सारसरसं भवदीयवदनकमलनिर्गलन्निर्मलमुक्ताफलकल्पमनल्पक-
ल्पतरुकुसुमसौरभ्यलोभनीयं वचननिचयमास्वादयन्नप्यनुजातपरि-
पूर्णतोषपोष एवैष मदीयमानसमानसचरराजहंसस्तदस्ति हार्दमेशुरं
किंचिदभ्यर्थनीयम् । यदयमहमिदानीं शचीशाद्यखिलदिगीशानुर-
ञ्जिताशानितम्बिनीनितम्बबिम्बकदम्बदुकूलायमानयशोनिकुरम्ब-
स्य निरुपधिकृपानिधेरनुगृहीतयदुमहीभृदन्ववायस्य निखिललोक-
हितावतारस्य भगवतो गरुडध्वजस्य हंसवृषकेतनाद्यखिलसुरवराप-
रिकलितसारमतुलमानं निरुपमानं महिमानमाकर्ण्य निरतिशयसु-
खमनुपलमनुभवितुमभिलषामीति ।

आकर्ण्य कर्णमधुरं वचनं तदेत-
दानन्दबन्धुरममुष्य महीमघोनः ॥

---

१ बद्धानि । २ कदम्बः समुदायः तेन कन्दलितानि अङ्कुरितानि । ३ ध-र्मतत्त्वसमुदायनिबिडानि । ४ मकरकराभ्यां कर्तरीकृतो व्याप्तः सिन्धुरो ह-स्ती तत्कथानिबन्धेन बन्धुराणि रमणीयानि । ५ मिहिरःसूर्यः हिमकरश्चन्द्रः । ६ मिश्रीकृस्यैकीकृतानि । ७ सदानन्दः सच्चिदानन्दः परमात्मा वा सतामानन्द वितरणे निपुणानि । ८ आसारः [illegible] निरन्तरधारा । ९ हृदयोल्लसितम् । १० निरुपधिर्निष्कपटा । ११ अ[illegible] । १२ महीशस्य परीक्षितः ।

वैयासकेःकथयति स्म ततो निपीय
कारुण्यपूरपरिपूरितया दृशैनम् ॥ २१ ॥
महीनाथ प्रज्ञा तव परिणता पुण्यनिवहै-
रुदीता शुश्रूषा मधुरिपुकथानां यदतुला ॥
अभूमिर्वाच्यानां किमुत भवतः पूर्वपुरुषै-
रसौ भूमौ भूमाविह विरचितानां प्रतपसाम् ॥ २२ ॥

इत्थमेनभिनन्द्य भूयसौ पारिकाङ्क्षिविभुराभिमन्यवम् ॥
आददे सपदि वाचमादरान्माधुरीभिरधरीणमाक्षिकाम् ॥२३॥

स्थाने हि तत् । यतो हि लोके ।

अलक्षितार्था अपि लोभनीया द्विजस्य वाचः शुकनामभाजः ॥
ता एव चेदर्थयुता मुकुन्दलीलाकुलास्ता अपि किं पुनः स्यात् २४॥

पुरा खलु निखिलभारसहनविरुदधुरंधरापि वसुंधरा दुःसह-मदमेदुरनृशंसोत्तंसकंसादिमेदिनीदयितंकैतवकैतवापचारविशारद-निशाचरभारभरमसहमाना परिगृह्य पयस्विनीरूपमश्रुजलक-लुषनयनयुगलमत्यग्रशोकपावकपरवशानिजाशयपरिदेवनपरिवेदन-निनदद्दन्तुरितहरिदन्तराहरिचरणचिन्तनान्तरा भगवन्तमम्भो-जसंभवं शरणमभजत् । सोपि सपद्येवानवद्यनिवेदनविदिततदीयवे-दनापनोदाय शतमखप्रमुखबर्हिर्मुखैपरिवृतश्चतुराननः सुरभिरूप-धारिण्या धरण्या सहैव पयःपयोनिधिमुपससर्प । तत्र ।

इदं कल्याणानां पदमपि कृपाया निरवधे-
र्हरेः[13] क्रव्यादानां[14] तरमपि भवाब्धेः श्रितवताम् ॥

---

१ व्यासस्यापत्यं श्रीशुकः । व्यासवरुडेत्यादिना इञकङ् च । २ पक्का । ३ प्रतापो महिमा वा । ४ पारिकाङ्क्षिविभुः तपस्विश्रेष्ठः । ५ मधुरिमभिः अधरीणा न्यूनीकृतं माक्षिकं मधु यया । ६ पक्षिणः पक्षे विप्रस्य । ७ कैतवं कपटं कैतवं द्यूतं । ८ परिदेवनपरिवेदनं दुःखोद्गा[illegible]नं तन्निनदेन दन्तुरितानि भगितानि हरितां दिशामन्तराणि यस्याः यया [illegible] ब्रह्माणम् । १० पृथ्व्या वेदनाध्वंसाय । ११ बर्हिर्मुखा देवाः । १२ क्षीरस[illegible]रम् । १३ नाशकम् । १४ रक्षसाम् ।

श्रियो वश्यं भूयः सकलजगतीधारणपरं
विधिः स्तावंस्तीवं मधुरिपुमनंसीत्सविनयम् ॥ २५ ॥
अपारकरुणापूरपरिपूरितमानसम् ॥
वाग्भिस्त्रयीमयीभिस्तमुपतस्थे पितामहः ॥ २६ ॥
समाधिस्थे वेधस्यविदितपदा वागचकल-
त्सुधाराकारा नभसि तदभीष्टद्रुसदृशी ॥
निशम्यैनां वेधास्तदनु दनुजारातिनिचया-
नसावूचे वाचं प्रतिनिनदवाचालितदिशम् ॥ २७ ॥

तथा हि । विदित एवानिवेदितोपि भगवता चतुर्भुजेन निरवधिरसौ वसुन्धराज्वरः । तदयमवनिव्यसनविवासाय संप्रति संप्रतिपन्नवसुदेवतनयभावः परिवसुन्धरमवतरितुमध्यवस्यति । तदिदानीमविलम्बितमेवावलम्बनीयस्तदभ्यर्चनाय भवद्भिरपि यदुकुलसमुद्भवः। एवममरवरवर्तिनीभिरपि मुररिपुचरणपरिचरणाय परिकलनीय एव मानवमानिनीभावः । तथा ऋषिभिरपि पुरुषोत्तमपरितोषपोषणाय गोरूपधारणमादरणीयमेव । कुम्भीनसाविभुरपि मधुरिपुभजनाय भवितैव तदग्रभवः । मायापि च भुवनमोहिनीमुरशासनशासनेन परिवसुन्धरमवतरति कमलालयापि भुवि तदीयकुलपालिकापदमनुबुभूषते। तदचिरमेव यथोदितमनुष्ठीयतामिति विबुधसभासदः समादिश्य समाश्वास्य च मेदिनीममृतधाराकल्पजल्पितपरम्पराभिरनुसदनमुपससारासौ सारसासनः ।

मधुरा मधुरा नाम राजधानी पुरातनी ॥
देशेषु शूरसेनेषु बभूव यदुभूभुजाम् ॥ २८ ॥

---

१ ब्रह्मा । २ स्तुत्वास्तुत्वा आभीक्ष्ण्ये णमूल्चेत्यनेन णमूल् ‘ नित्यवीप्सयो’रिति द्विर्वचनम् । ३ नमश्चकार । णमेर्लुङ् । ४ वाचालिताः शब्दिताः । ५ परिवसुन्धरम् = वसुन्धरायाम् । ६ कुम्भीनसानां सर्पाणां विभुः स्वामी शेषः । ७ अग्रभवो जेष्ठबन्धुः । ८ मुख्यपालितापदम् । ९ हंसवाहनो ब्रह्मा ।

अवसन्नगरीमेनामुग्रसेनो महीपतिः ॥
गुणैरनुचकारैनमनुजो मनुजोत्तमः ॥ २९ ॥
देवकस्तनया तस्य देवकी देवतोपमा ॥
तनयोप्युग्रसेनस्य कंसो हि कुलपांसनः ॥ ३० ॥

अथ कदाचिदानकदुन्दुभिरधिमधुरानगरमुपयम्य देवकतनूजामुपजातहर्षप्रकर्षः सह जायया परिजनेन च निजभवननिगमिषया समारुरोह रथमनुपहतमनोरथः ।

वात्सल्यं भगिनीजने प्रकटयन्कंसस्ततः सादरं
सारथ्यं समुपेयिवान् परिवृतो रौक्मै रथानां शतैः ॥
सानन्दं सरसात्मना दुहितरि प्रेम्णा ददौ देवकः
प्राज्यं हस्तिरथाश्वमुज्वलतरा दासीः सुरूपा अपि ॥३१॥

गीतैर्वारविलासिनीविरचितैः कल्याणवादाङ्कुरै-[1]
रुद्वेलैरपि काहलीकलकलैरापूरि रोदोन्तरम्[2] ॥
कंसं निर्वृतमन्तरेण गगने दैवी तदा वागभू-
दस्यास्ते लयमष्टमः कलयिता गर्भो भगिन्या इति ॥३२॥

एनामाकर्ण्य वाणीं विकलितहृदयः कंस एष स्वसारं
हैस्तग्राहं[3] गृहीत्वा कचनिचयमिमां हन्तुमभ्युद्यतोभूत् ॥
दृष्ट्वा कष्टायमानं तमतिमृदुगिरा सान्त्वयामास शौरिः
प्रत्यादिष्टोथ तेन प्रकृतिमुपगतो न प्रियाभङ्गभीरुः ॥ ३३ ॥

अनिवार्यमथालोच्य सान्त्वैस्तस्य विनिश्चयम् ॥
उवाच वचनं शौरिर्दयिताप्रेमविह्वलः ॥ ३४ ॥

भोभो भगवन् भोजकुलतिलक प्रतीतदीनदयालुभावस्य दिशान्तविश्रान्तयशोवैभवस्य न सांप्रतमेवं तव तपस्विनीमेनामनुजा-[4]

---

१ कल्याणभाषणयुक्तैः । २ रोदसोः द्यावापृथिव्योरन्तरम् । ३ हस्तेन गृहीत्वेत्यर्थः ‘ हस्तेवर्तिग्रहो’रिति णमुल् । ४ दीनाम् ।

मपि तनुजामिव सभाजनविहिताशिषमदोषलेशामशेषगुणभाजनभूतामसुभिर्वियोजयितुम्। किं तु भवदत्याहितहेतुभूतमेतदीयमपत्यजातमुद्भविष्यति यदि सद्य एव त्वदायत्तं तदहं करवाणीति।

मत्वा हितां स तामुक्तिं परिणामविषायिताम्॥
ततो निववृते हिंस्रो भगिनीवधपौरुषात्॥ ३५॥

इत्थमानकन्दुदुभिरुग्रसेनसुतसमालम्बितां निजवधूवधाचिकीर्षितां[1] मुत्सार्य सम्प्रमोदमेव तया दयितया सह निजसदनमाससाद।

वासरैस्तदनुस्तोकैः कीर्तिमन्नामभाजनम्॥
सुषुवे देवकीसूनुमैन्द्री चन्द्रमसं यथा॥ ३६॥

तदनु स वसुदेवोपि निजवचसि दत्तचित्तः सत्यसन्धस्तदानीमेव तादृशप्रथितयशाःप्रथमतनयसमुदयनिशमनसमुन्नतमानन्दाङ्कुरमनवलोक्य सत्यवृत्तिभङ्गभयादङ्गनाशयनादेनमुपनीय कथमपि कंसाय समर्पयामास।

कंसोपि धैर्यमनिवार्यमथो विचार्य
तस्यातिवीर्यमभिनन्द्य तमाबभाषे[2]॥
नास्मद्भयं नय शिशुं तदिमं स्वगेहं
गर्भोष्टमो मम जिघांसुरमोणि पूर्वम्॥ ३७॥

इत्थमनुकम्प्यमानोपि कंसेन शङ्कितमानस एव वसुदेवस्तं तनयं समादाय निजसदनमाससाद। अथ कदाचिदौग्रसेनिरनवरतवृन्दारकवृन्दवन्द्यमानचरणारविन्दमखिलामरमुनिवृन्दारकाधीशमविरतविग्रहौनिवेशमपि[3] समुज्झितविग्रहाभिनिवेशं[4] तिरस्कृतगुणजालमप्यङ्गीकृतमुररिपुगुणगणकीर्तनोद्योगं सद्योगिनं नारदमेप्यवनस्वकृत्यकृत्यविदग्रेसरः सुरवरकार्यवितीर्णचक्षुर्मङ्क्षु तमभिलक्ष्य वाक्यमिदमवादीत्।[5]

---

१ बहुकष्टेनेत्यर्थः। २ अब्रवीत्। ३ निरन्तरस्मृतिमान्। ४ समुज्झितस्त्यक्तः विग्रहाभिनिवेशः शरीराभिमानो येन तम्। ५ अत्र किंचित्खण्डितमिति भाति 'आगतं सम्पूजितवान् नारदोपि' इत्यर्थः कैश्चित्पदैर्भवितव्यम्।

वार्ष्णेया वसुदेवदेवकमुखा गोपाश्च नन्दादय-
स्तत्कान्ता अपि देवता इति मतिं पर्याकुलां मा कृथाः ॥
त्वद्गृह्यानपि दानवान् बकमुखान् त्वं कालनेमिं पुरा-
भूतं विद्धि चतुर्भुजोपि भविता नाथो यदूनामिति ॥३८॥

इत्थमुपदिश्य सुरतपस्विनि समपयाते स यातुजनशेखरस्तन्मुखवैखरीविदितयादवदेवभावसंभूतभयविधूननाय देवकदुहितरमानकदुन्दुभिना साकमेव कारागारोदरे निधाय निगडसन्दानितं पितरमपि विधाय निजशासनविषयीकृतशूरविषयश्चाणूरजरासन्धकेशिमहाशनमुष्टिकारिष्टधेनुकवकतृणावर्ताहियातुधानाविवर्तपरिवृतः सपादि यदुकुलकदनमेव हितमित्थमभिमतमिति मन्दमतिरवद्यकर्मैवमतनुत । यद्भगिनीगर्भसंभवमर्भकषट्कमपि हि वृथैव कथावशेषभावमुपनिनायेति ।

शेषाख्यं बिभरांबभूव भगवद्धामानुविद्धं ततो-
गर्भं देवकनान्दिनी हरिरथ त्रातुं तमत्याहितात् ॥
क्षिप्रं गर्भममुं विकृष्य सकलान् संमोह्य नन्दव्रजे
रोहिण्या विनिवेशयेति जठरे मायां निजामादिशत् ॥३९॥

तया सपादि निर्व्यूढे वचने वनमालिनः ॥
गर्भो विगलितो देव्या इति पौरा विचुक्रुशुः ॥ ४० ॥

अथातनुतनुच्छायाविशदीकृतदिङ्मुखम् ॥
रोहिणी सुषुवे सूनुं रोहिणीव गरीयसी ॥ ४१ ॥

भगवान् सहृदयहृदयः समनन्तरमेव वसुदेवमनोरथपूरणाय प्रथमतस्तन्मनोरथमारुह्यैव विशेषशयनार्हं देवकीजठरजलनिधिमवजगाहे । अथ कथमपि सभयमौग्रसेनिरननुभूतपूर्वाखर्वसर्वसुपर्वपर्व-

१ राक्षसजनाधिपः । २ दूरीकरणाय । ३ विवर्तः समुदयः । ४ आचरिते । ५ अतन्वी महती । ६ औग्रसेनिः कंसः । ७ अखर्वाविस्तीर्णा । ८ सुपर्वाणो देवाः । ९ पर्व पौर्णिमा ।

वैसुषमाविशेषविषयीभूतामेतामापन्नसत्त्वामालोक्य नियतमविलम्बितमुत्पत्स्यमानमपत्यमेव मदत्याहितहेतुभूतमिति चिन्तासंतानतन्तुवितानसंदानितान्तःकरणोनुक्षणं समभवत् । अथ पितामहपुरहरपुरःसराः सुराः सुरर्षिभिर्नारदादिभिः सह वसुमतीमौलिललामायितकारामन्दिरोदरमवतीर्य गर्भीकृतचतुर्दशभुवनमपि कृपया स्वीकृतदेवकीगर्भभवनाधिवासं विश्वसंत्राणचेतसं कमलाकौस्तुभाद्यलंकृतवक्षसं पीतवाससं भगवन्तमम्भोजलोचनमस्तौषिषुः ।

दामोदराय दमितामितदानवाय
दारिद्र्यदावदहनाय दयापराय ॥
दूरीकृतस्वदुरिताय दुरासदाय
कुर्मो नमः शरणरक्षणदीक्षिताय ॥ ४२ ॥

नीलाभ्रकान्तिनिकुरम्बकरम्बिताय
कल्याणरत्ननिधये करुणार्णवाय ॥
नीलालकाय पललाशपतालजाल-
झञ्झानिलाय पुरुषाय नमः परस्मै ॥ ४३ ॥

स्रष्टा त्वमेव जगतः परिपालकोपि
संहारकोसि भवसीति समामनन्ति ॥
कारुण्यपूरपरिपूरितमानसस्य
संहारधीस्तव कथं न्विति न प्रतीमः ॥ ४४ ॥

द्रष्टा त्वमेव निखिलोसि न दृश्यमेत-
दित्याकलय्य विषयापहृतान्तरङ्गाः ॥
व्यामृश्य दृश्यमपि तद्धियमप्यपास्य
संवित्सुखैकरसिकाः समुपासते त्वाम् ॥ ४५ ॥

---

१ सुषमा कान्तिः । २ अत्याहितं महद्भयम् । ३ पललं मांसमश्नन्ति ते पललाशा राक्षसाः तान् पान्ति ते पललाशपाः राक्षसाधिपा इत्यर्थः त एव तालाः तालवृक्षास्तेषां जालानि तानि प्रति झञ्झावात इव । ४ संवित् ज्ञानम् ।

आनन्दजाश्रुभरिताक्षमुदीतकम्प-
मुद्भूतगद्गदमुदञ्चितरोमहर्षम् ॥
त्वामेव संविदरविन्दमरन्दबिन्दु-
सन्दोहसान्द्रमभिवन्द्य मुदं प्रयान्ति ॥ ४६ ॥
तीर्णानि शोकजलधौ यमिनां मनांसि
धृत्वा तवातिमृदुलं चरणप्रवालम् ॥
मज्जन्ति हन्त महतीमपि गात्रयष्टि-
मालम्ब्य निर्भरसुखामृतदीर्घिकासु ॥ ४७ ॥
लब्ध्वा भवत्पदसरोजपरागजाल-
संगं शिलापि जडभावममुञ्चताशु ॥
स्तम्भं भजन्ति हृदये न भवन्तमेव
चित्रं चिराय परिरभ्य शरीरिणोपि ॥ ४८ ॥
स्थाने विदारितहृदे नखरैरमावि
यद्वैरिणे नरहरे तव गर्भभाजाः ॥
यान्ति श्रिता अपि विलोकनमात्रतस्ते
हृद्ग्रन्थिभेदमिति किं नु विचित्रमत्र ॥ ४९ ॥
अनीशा या धाष्टर्याद्दहरमभिधातुं श्रुतिरपि
स्वशक्तैः शैथिल्यं स्फुटयति यतो वाच इति ते ॥
ततः स्तोतुं शक्ताः कथमिह वयं त्वामलमतः
कृपापारावारो जयतु जगतीपालनकृते ॥ ५० ॥
स्तुत्वैवमरविन्दाक्षमुग्रसेनसुतार्दिताम् ॥
देवकीं मुहुराश्वास्य देवाः स्वभवनं ययुः ॥ ५१ ॥
तदनु देवकनन्दिनी शनैःशनैः समुपलक्षितदोहदलक्षणा

१ यमिनां नियमितमसनाम् । २ दीर्घिका कृत्रिम सरः । ३ जडीभावम् । ४ दहरमाकाशं 'दहर उत्तरेभ्य' इति सूत्रं द्रष्टव्यम् । ५ यतो वाचो निवर्तन्ते इ० श्रुतयः 'ईक्षतेर्नाशब्द'मिति ब्रह्मसूत्रं द्रष्टव्यम् ।

विलक्षणसुषमा विशेषान्तरङ्गसंतोषभरादिव बहिर्भूतमपहाय विविधभूषणभारमुपचितरुचिनिचयमवयवजातमुदितप्रसादमदीधरत् ।

यच्चिन्तनेनापि निमेषमात्रात् सारूप्यमाप्येत तदभ्रनीलम् ॥
गर्भे निधायापि बभार रूपं चित्रं हि गौरं वसुदेवपत्नी ॥१२॥

गौरवं भजति गर्भसंभवान्मध्यमे मृगदृशस्तनीयसि ॥
साधु तद्वद्विमकद्धलिस्थले हेमदामनिकुरम्बमात्रुटत्॥ १३ ॥

गभीरभावेन बभूव नाभिमहाबिलं लोलविलोचनायाः ॥
गाधापि गर्भस्फुरणेन विष्णुपदच्छलात्प्राप महाबिलत्वम् ॥१४॥

ससत्त्वेति प्रथा लोकेष्वास्तां गर्भवतीष्वलम् ॥
अन्वर्थकी तु देवक्यामेव सत्त्वसमाश्रयात् ॥ १५ ॥

अथोदर्केष्वर्कादिग्रहनक्षत्रराशिषु निखिलदेहिष्वपि अमन्दानन्दसंकुलेषु धरापुराकरनिकरेष्वपि शुभंकरेषु नदीसलिलेषु च गतकलुषेषु सकलसलिलाशयेषु च विमलजीवनाशयेषु बुधजनसमूहेषु च विमोहेषु सकलावनिसुरेषु च भासुरेषु निखिलदिशान्तेषु च शान्तेषु द्विजातिज्वलनेषु चाप्युज्ज्वलकीलकलनेषु मरुत्सु च सुखस्पर्शभृत्सु जीमूतगर्जितेषु च तडिल्लतातर्जितेषु व्यसननिर्झरेषु झर्झरेषु सकलसमयादिष्टेषु च दर्शितदृष्टेषु सकलकल्पपादपकुसुमगन्धबन्धुरे च कारामन्दिरे गीर्वाणवरवर्णिनीनृत्येषु च संप्रवृत्तेषु गगनकल्लोलिनीकल्लोलजालकलकलविडम्बनशौण्डेषु च निर्जरजयाडिण्डिमाडम्बरेषु परिमधुरानगरमधिनिशीथमभिभूतविरोचनाभिधतेजस्त्रितयमुद्भासितभुवनत्रितयमभूतपूर्वं किमपि महः प्रादुरभूत् ।

---

१ वियद्योगेन । पक्षे विष्णुपदसान्निध्येन । २ मेघद्वारत्वम् पक्षे यथार्थमेव ।३ सत्त्वमयः परमेशो विष्णुस्तदाश्रयात् । ४ उच्चैःस्थानेषु ।५ आकरः समूहः । ६ विमलोदकाः आशया अन्तर्भागा एषाम् तेषु । ७ गार्हपत्याद्यग्निषु । ८ निर्जरा देवाः । ९ सूर्यचन्द्राग्नितेजस्त्रयसमूहस्ततोपि त्रितयमन्यत् ।

आविर्बभूव देवक्यां ततः श्रीवत्सलाञ्छनः ॥
द्रष्टुमेनमिव प्राच्यां शीतांशुरपि तत्क्षणम् ॥ ९६ ॥
किशोरं न्यध्यायत्तदनु वसुदेवः स्वतपसा-
महीनानामेनं फलमिव नवीनारुणनिभम् ॥
कृपापारावारं करबदरकल्पं सुकृतिनां
सुधाधाराधारायितनयनधाराश्चितमुखम् ॥ ९७ ॥
खानिं कल्याणानां यदुकुलमहाभाग्यविभवं
स्फुरल्लीलाजालं बलभिदुपलश्यामलतनुम् ॥
गदां शंखं चक्रं धनुरपि दधानं करतलै-
स्तनौ पीतं वासः शिरसि मुकुटं कौस्तुभमुरः ॥ ९८ ॥
तनूजानां पाण्डोः किमपि कुलदैवं सकरुणं
विलोलल्लावण्यामृतजलधिवेलायिततनुम् ॥
गुणानामम्भोधिं सुकृतनिचयं विग्रहभृतं
प्रकाशांस्तन्वानं चकचकितभासैर्दश दिशः ॥ ९९ ॥

एवमानकदुन्दुभिरत्यद्भुतानुभावमभूतपूर्वमाविर्भूतमेनमर्भकं चतुर्भुजमवधार्य निर्भरानन्दसिन्धुनिमज्जनमनुभवन्नपि पुनरुक्तनयनानन्दसरिदाप्लुतशरीरश्चेतसैव सुरभिशतंशतमवनिसुरसाद्विधाय तमेव दयावन्तं भगवन्तमम्बुजलोचनमस्तौषीत् ।

पुराणो नीरूपस्त्वमसि विगुणो नैव वशगो
गिरां वा निश्चेष्टः परमपि तु चैतन्यनिलयः ॥
कथं वा रज्यन्ति श्रुतियुवतयस्त्वय्यपि हरे
न जय्या माया ते बत भुवनसंमोहनकरी ॥ १०० ॥
निधिः कल्याणानां त्वमधिकमुदारः सकरुणः
कृतार्थास्ते भृत्या इति च तव सेवापरवशाः ॥

---

१ अहीनानामन्यूनानाम् । २ सुरभिशतशतं गोसहस्रम् । ३ अवनिसुरसात्कृत्वा ब्राह्मणेभ्य दत्वाइत्यर्थः । 'देयेत्रा च' इति कृयोगे सातिः ।

हते यत्सर्वस्वेप्यभवदतिरिक्तो बत जना-
त्ततः स्वात्मा लब्धः परमिति हि लाभः समधिकः ॥६१॥
दुरापं त्वां मत्वा जगति सुदृशां वश्यमपरै-
रभीष्टां भक्तिं ते विततमतयो यान्ति शरणम् ॥
असि श्रेयोदाता यदि तदवलम्बो दृढतरो
न चेदेवं तेषां न खलु फललेशोपि भवतः ॥ ६२ ॥
नाथ त्वद्गुणजालबद्धहृदया भक्ता विमुक्ताः कथं
संजातामितवेदना अपि कथं मग्नाः सुखाम्भोनिधौ ॥
ध्यानेन प्रकृतिं तवैव गमिता मायामतीताः कथं
नाश्चर्यं जगदिन्द्रजालकलने पिञ्छापि वाञ्छा तव॥६३॥
प्राप्तास्तमःपरिचयाद्विरसं भवान्धुं
निर्यान्ति ते गुणगणानवलम्ब्य धीराः ॥
मग्नात्मनां त्वयि सुखाम्बुनिधावमीषां
संभावनापि निरयस्य पुनः कुतः स्यात् ॥ ६४ ॥
इति स्तावंस्तावं प्रति मुहुरनंसीन्मधुरिपुं
सुखं ध्यायंध्यायं चिरमपि न सौहित्यमगमत् ॥
दृशा पायंपायं सुकृतमयमात्मानमभजत्
रिपुं स्मारंस्मारं प्रथितपरमत्याहितमपि ॥ ६५ ॥

तदनु देवकनन्दनापि मुकुन्दममन्दानन्दमयमभिवन्द्य समभिनन्द्यच सुधासारसरसाभिरमितभारतीभिरित्थमेनमभ्यर्थयत्। भगवन्ननुभूतचरमभिरूपं रूपमिदं सुनिरूपं मादृशां दृशां मा कुर्वीथाः । अपि तु तनयविलयदूयमानमानसामेनामानन्दय सत्वरमेवारिभयमप्यपहरतु भवानिति। एवमभिदधानौ तनयविरहकातरौ मातरपितरौ

१ संसारकूपम् । २ ध्यात्वाध्यात्वा णमुल् द्विवचनं च पूर्ववत् । ३ तृप्तिम् । ४ तनयविलयेन दूयमानं दुःखितं मानसं मनो यस्याः ताम् ।

प्रसन्नवदनो मुरशासनः सादरमेवमवादीत् । पुरा खलु पृश्निसुतपनामधारिभ्यां भवद्भ्यां दुष्करतरतपःसाधनेन त्रिजगदसाध्योपि मत्प्रसादः सुलभीकृतस्तस्यैवमपरोक्षरूपेण जगदनीदृशेनापीदृशेन रूपेण मदीयदर्शनफलमिति ।

पुत्रः पुरा भवामीति युवयोर्वरमप्यदाम् ॥
तेनाहमिह जातोद्य भवत्प्रीतिविधित्सया ॥ ६६ ॥
मामितो ब्रह्मभावेन पुत्रभावेन वा युवाम् ॥
चिन्तयन्तावयत्नेन दुःखवार्धिं तरिष्यथः ॥ ६७ ॥
मद्रूपदर्शनानन्दमाधाय हृदयान्तरे ॥
नन्दव्रजमहं नेयः सांप्रतं सम्प्रतारणात् ॥ ६८ ॥
एवं व्याहृत्य भगवान् बभूव प्राकृतः शिशुः ॥
रोदिति स्म ततस्तारं तारको भववारिधेः ॥ ६९ ॥
मायापि नन्दजायायामजायत तदा हरेः ॥
तया विमोहिताः सर्वे कंसान्तःपुरचारिणः ॥ ७० ॥

तदनुनिरवधिकानन्दतुन्दिलः स चानकदुन्दुभिर्जनार्दनप्रचोदनेन नन्दमन्दिरमुपयातुकामस्तत्क्षणमेव निगलितनिगलबन्धः सूतिकानिकेतनाद्विनिर्गत्य गत्यनुकूलमयत्नसंभूतमररविघट्टनमुपलक्ष्य विस्मयमयमानसोद्भुततरमन्तःपुरतः पुरतोरणतोपि निष्क्रम्य फणिपतिफणागणनिवारितवारिधारमविलम्बितमेवाम्बरमणिकन्यकामपारोदकामप्यन्तरेण तरणिसरणिमतिलङ्घ्य नन्दव्रजमवजगाहे ।

---

१ जगदनीदृशेन जगद्विलक्षणेन । २ विधित्सया विधातुमिच्छया । 'अत्र लोपे'त्यनेनाभ्यासलोपः । ३ युक्त्या । ४ तारं गम्भीरस्वरेण क्रियाविशेषणमेतत् । ५ यशोदायाम् । ६ निगलबन्धः डलयोरभेदात् निगडबन्धः अनुप्रासार्थं लकार एव पठनीयः । ७ अररविघट्टनं कपाटबन्धनम् । ८ पुरतोरणतः नगरबहिर्द्वारतः । ९ सूर्यकन्यकां यमुनाम् । १० अपारमनन्तमुदकं यस्याः ताम् ११ अन्तरेण तरणिसरणिम् नावं विनेत्यर्थः ।

स्वा[1]क्षरक्षितदिगङ्गनालपनाम्बुजचुम्बिनि भगवति समुद[2]श्चति विव[3]स्वति च दुर्यन्त्रि[4]तवृत्तिदुर्मन्त्रिभिराशु संमन्त्रयितुमन्त[5]रपुरात्सभासमाजमधिगम्य निखिलमपि कर्णपु[6]टपर्णलिखितं कपटबालिकासंलपितमभिनिवेद्य कथमग्रे विधेयमित्यभिदधानस्तूष्णीमेव वृष्णिहितवर्धिष्णुं विष्णुं चिन्तयन् चिन्तादन्तुरितचेता एव यावदास तावतोपि स्वभावत एवापवित्रचरित्रास्तत्र च तन्नियन्[7]त्रणपरतन्त्रा दुर्मन्त्रिणः स[8]कलवसुमतीवास्तव्यस्तोकतरपृथुकमथनकृतनिश्चयाश्चक्री[9]कृतपराक्रमाः स्वीकृतक्र[10]व्यादक्रमाः क्रमशो निश्चक्रमुः । तदनु स चापि सम[11]ञ्जसमासनार्हः समाजमपहाय विस[12]हाय एवान्तरागारमगाधगर्ह्यगोपदगोष्ठीनमभ्यगात् ।

इतस्तु नन्दः सुतभावभाजः पर[13]स्यै साक्षा[14]त्करणेन पुंसः ॥
निर्वाणमापानकदुन्दुभेस्तु बन्धोऽभवच्चक्रधरे [15]परोक्षे ॥७७॥
युक्तमेवैतद्यद्धारिपदयोगे तमोनिवृत्तिस्तदयोगे तत्प्रवृत्तिरिति ।
स्थाने तमादाय तदा यशोदाप्यम[16]न्दमानन्दमविन्दतेति ॥
हृदा मुदा यं परिरभ्य लीलालोलाविरागा यत[17]योपि भूताः ॥७८॥

१ स हस्राक्षेति । सहस्राक्ष इन्द्रः तेन रक्षिता ( सदिक्पालो यस्याः ) या दिक् सैवाङ्गना तस्या आलपनं मुखं ( अम्बुजमिव ) तस्य चुम्बिनि चुम्बयति । २ समुदञ्चति उदयति । ३ विवस्वति सूर्ये । ४ दुर्यन्त्रिता दुष्टा वृत्तिर्वर्तनं यस्य स कंसः । ५ अन्तरपुरादन्तःपुरात् । ६ कर्णपुटपर्णलिखितम् कर्णपुटे एव पर्णे लिखितं । श्रुत्वा धृतम् । ७ तन्नियन्त्रण परतन्त्राः कंसाज्ञाधीनाः । ८ सकलेति । सर्वा या वसुमती पृथ्वी तस्यां वास्तव्यं येषां ते पृथुकाः बालकाः 'पृथुकौ चिपिटार्भकौ' इत्यमरः । तेषां मथने नाशे कृतो निश्चयो यैः । ९ चक्रीकृतपराक्रमाः समूहीकृतपराक्रमाः । १० क्रव्यादाः राक्षसाः ।११ समञ्जसं तत्कालमेव । १२ विसहायः एक एव । १३ परस्य परब्रह्मणः । १४ प्रत्यक्षदर्शनेन । १५ परोक्षे अदृष्टे । १६ अमन्दमातिशयेन । १७ संन्यासिनोपि ।

बभूव चित्रं भगवत्प्रसङ्गान्मायावृताया अपि नन्दवध्वाः ॥
सुखं निजानन्दममुष्य तत्त्वं ज्ञात्वापि नासीद्वसुदेवतन्व्याः॥७९॥

नन्दोपि तदनु नन्दनसमुदयसमुदञ्चितमुचिताहर्विहितमानन्दमनुभूय पयस्विनीशतमपरिमितमपि नानाविधवासःकनकालंकारनिचयमवनिगीर्वाणसाद्विधाय[1] तोरणवितानपताकिकानिकायभूषितेषु[2] निकेतनेषु दुन्दुभिपटहनिःसाणरणनमुखरीकृतमुखेषु हरिदन्तरे[3] लास्यविलासलालसासु[4] वेशमत्तकाशिनीषु श्रुतिरुजापहाररसायनेषु[5] गायनेषु विकीर्णसुमनोगणेषु[6] सुमनोगणेषु[7] च प्रकटितकल्याणागाधगाथेषु[8] मागधेषु[9] समुदितानन्दपल्लवेषु वल्लवेषु[10] प्रवर्तितमङ्गलसूक्तजातेषु[11] द्विजातेषु[12] तत्क्षणमात्मजन्मनो[13] जातकर्ममङ्गलं निर्वर्तयामास ।

क्रमेण ववृधे शौरिर्धर्मो विग्रहवानिव[14] ॥
तथा दुर्विनयाङ्कूरः कंसस्य च निरङ्कुशः[15] ॥ ८० ॥

अथ कदाचिदुपहारवितरणाय[16] व्रजपरित्राणभरमखिलमपि[17] निजमनुजीविजनाधीनं[18] प्रविधाय समधिगतमथुरानगरमुपहृतसमस्त-

---

१ ब्राह्मणेभ्यो दत्वेत्यर्थः । २ निकायः समुदायः । ३ हरिदन्तरे दिशां मध्ये। ४ लास्यं नर्तनं विलासा आनन्दचेष्टाश्च तत्र लालसाः । ५ श्रुतिरोगहारे रसायनानीव। ६ विकीर्णाः वर्षिताः सुमनसां पुष्पाणां गणाः यैः एतादृशेषु। ७ सुमनोगणेषु देवसमूहेषु । ८ प्रकटिताः उक्ताः कल्याणंयुक्ताः अगाधाः अनन्ताः गाथाः पूर्वकथा यैः । ९ मागधाः स्तुतिपाठकाः । १० बल्लवेषु गोपालेषु । 'गोपेगोपालगोसंख्यगोधुगाभीरवल्लवाः' इत्यमरः । ११ प्रवर्तितं वक्तुमारब्धं मङ्गलसूक्तानां जातं समूहो यैस्तेषु । १२ । द्विजातेषु ब्राह्मणेषु । १३ आत्मजन्मनः पुत्रस्य । १४ विग्रहवान् देहवान् । १५ निरङ्कुशः अव्याहतः । १६ उपहारवितरणाय राज्ञः समर्प्यमाणवस्तुदानार्थं । १७ व्रजपरित्राणभरम् गोकुलरक्षणाधिकारम् । १८ अनुजीविनो भृत्याः ।

वस्तुस्तोमकृतवितरणतया परितोषितनागरिकपरिवृढं सुहृल्लताकन्दमिव नन्दमुपगतमाकर्ण्य वसुदेवः ससत्वरमदसीयमुदवसितमतिमोदेन तदानीमियासीत् ।

तावथ भ्रातरौ स्निग्धौ दैवात्कृतसमागमौ ॥
परस्परं परिष्वज्य पप्रच्छतुरनामयम् ॥ ८१ ॥
भ्रातस्तनयसौख्येन मधुरेण विवर्धसे ॥
जाताच्युतसुताशास्य यदच्युतसुतस्पृहा ॥ ८२ ॥
कुशली रौहिणेयोऽस्ति भवतः किमु सद्मनि ॥
सुहृदैवाथ वा सिद्धा लोके मित्रगृहे मतिः ॥ ८३ ॥
तदर्पितकरस्याद्य नादेयमिह किंचन ॥
अतोऽर्हसि व्रजं गन्तुं कर्तुं नैवासनग्रहम् ॥ ८४ ॥
भ्रातर्व्रजमुपेक्षस्व नोत्पातशतसंकुलम् ॥
विररामाभिधायेदं नन्दमानकदुन्दुभिः ॥ ८५ ॥

प्रमुदितहृदयं विधाय शौरिं तदभिहितं हितमाकलय्य भूयः ॥
भवनमनु ततश्चचाल नन्दः सममनुजीविभिरावृतो गवीशैः ॥ ८६ ॥

पूतना तदनु नन्दमन्दिरं पातनाय निखिलार्भसन्ततेः ॥

---

१ परीति । परितोषितः संतोषितः नागरिकपरिवृढः नगरजनप्रभुः कंसो येन सः एतादृशम् । २ अच्युतः परमेश्वरः पक्षे अच्युता अव्याहता । ३ बलरामः । ४ अर्पितकरस्य अर्पितः करो राजग्राह्यं द्रव्यं येन सः तस्य राज्ञः कंसस्य । ५ नादेयं नोपादेयम् । ६ आसनग्रहं कर्तुं स्थातुम् । ७ तदभिहितं तेन वसुदेवेन ज्ञापितम् । ८ आकलय्य ज्ञात्वा । ९ गवीशैर्गोपालैः । १० निखिलेति । निखिला सर्वा या अर्भानां बालानां संततिः समुदायः तस्याः पातनाय पातनं कर्तुम् । 'क्रियार्थोपपदस्य'त्यादिना चतुर्थी ।

यातना[1] सुनिपुणा समाययौ दुर्जनार्दन[2]विनाशनाशया ॥८७॥

येयमवतंसितासित[3]कंसशासना कमनीय[4]तमकामिनीरूपसंपदतिकम्पित[5]वसुन्धरा धराधर[6]पयोधरा द्रुततरमजेशादिसुर[7]वरपरायणं नन्दभवनभूषणभूतमुपधि[8]बाललीलाशालिनं वनमालिनमतिवेल[9]बाललीलाविलासविलोकनलालसतया करग्रहं गृहीत्वा तदीयमधुरतरभारती[10]भरनिशमनपरवशानिजाशयेव कमपि कथमपि प्रमोदभरमभिनीय हाला[11]हलनिलयमानने स्तनं तदीये न्यवेशयदपाययच्च । सोपि नीलक[12]ण्ठवन्दितचरणारविन्दमखिललोकमोहनशिल्पविद्याविशारदमपि मामियमतिसंधा[13]तुमध्यवस्यतीति कौतुकेन तदीयच्छन्दमनुसंदधानस्तदीयमपरिमितं विषेण सह बलमपि प्राण[14]समीरणैः सममेव भोगीश[15]भोगसुखशयनः श्रीभगवानसिस्वदत्[16] ।

यत्पूतनाप्राणसमीरधारामसौ स्तनास्वादमिषादधासीत् ॥

---

१ यातना दुःखरूपा । २ दुर्जनार्दनः परमेश्वरस्तस्य यद्विनाशनं नाशस्तस्य आशा इच्छा तया । ३ अवतंसितासितकंसशासना । अवतंसितं मस्तकोद्धृतं सितं तीक्ष्णं कंसशासनं कंसाज्ञा यया सा । ४ कमनीयतमा अतिशयेन सुन्दरा कामिनीरूपसंपत् स्त्रीस्वरूपश्रीर्यस्याः । ५ अतिशयेन कम्पिता वसुंधरा यया । ६ धराधर इव पर्वत इव पयोधरौ कुचौ यस्याः । ७ अजेशादीति । अजो ब्रह्मा ईशः शिवः तौ आदी येषां ते च ते सुरास्तेषां परायणं आश्रयः । ८ उपध्या बाललीलाधारि नहि वस्तुत इत्यर्थः । ९ अतिवेलं अतिमात्रं बाललीलाया विलासाः तेषां विलोकनस्य लालसता इच्छा तया । १० भारती वाणी । ११ हालाहलं नाम विषं तस्य निलयं स्थानम् । १२ नीलकण्ठेन पीतहालाहलेन शिवेन वन्दितं चरणारविन्दं यस्य तम् । रामभजनेनैव शिवप्राशितविषशान्तिरभूत् । १३ अतिसन्धातुं मोहितुम् । १४ प्राणादिवायुभिः पंचप्राणैरित्यर्थः । १५ भोगीशः शेषः ‘उरगः पन्नगो भोगी’त्यमरः । स एव भोगः शय्या ‘भोगः शय्याहदारे’ष्विति कोशात् । तत्र सुखेन शयनं यस्य । १६ असिस्वदत् पीतवान् ।

चक्री[1] ततोसौ निरधारि किं तु चित्रं सुपर्णप्रणयत्वमस्मिन्॥८८॥
सासीज्जगत्[2]प्राणघयी स चास्याः प्राणानिलानेव निनाय नाशम्॥
तुल्येपराधे मरुतां हितो[3]भूदसौ रिपुः सेति विचित्रमेतत् ॥ ८९॥
निपीय तस्या गरला[4]यतानि न विव्यथे तानि पयांसि सोयम् ॥
आवासभूमिर्विषधेः[5] सुतायास्तस्यैव यस्याप्ततमेषु वित्तम् ॥ ९० ॥
अलमलमितिवादिनी ततोसौ झटिति विभिन्नसमग्र[6]संधिबन्धा ॥
अधिधरणि पपात नष्टसंज्ञा गिरिरिव दुःसहरौद्रवज्रघातात्९१॥

सपादि परशुभिन्नं गात्रमाधाय घोरं
कलयति शिशुरक्षां रक्षिणां चक्र[7]वाले ॥
अथ सदनमुपागान्नन्दगोपः सहास्तै-
र्निशमितसुतवार्तो विस्मयं चाप्यवाप ॥ ९२ ॥

अथ कदाचिदौत्तानिकमहोत्सवसमुत्सुकबल्लवविलासिनीकलकलकवलितेषु गृहान्[8]तराङ्गनप्रदेशेषु पयःपिपा[9]सासमाकुलयशोदाकिशोरमृदुचर[10]णतलसमीरितविशंकटनिकटशकटझर्झरीभावमुत्पातमाशङ्कमाना नन्दगोपपुरोगमास्तेन कर्मणाप्यनभि[11]भूतमर्भकमालोक्य [12]कमपि प्रमोदभरमनुबभूवुः । एवमुत्पातमपि परिभवन्तमनन्तमहि-

---

१ चक्री सर्पः । पक्षे चक्रं विद्यते यस्य सः विष्णुः । 'चक्री जालिकाभिरक्तोक कुलालाजाहिसूचके' इति मेदिनी । चित्रमेव सर्पस्य सुपर्णप्रणयत्वं गरुडयुक्तत्वम् । २ जगत्प्राणघयी जगतां प्राणनाशकर्त्री । पक्षे जगत्प्राणो वायुः । 'जगत्प्राणः समीरण' इत्यमरः । ३ अस्या जगत्प्राणघयित्वात्तन्नाशे वायोरयं कृष्णो हितकारीति पूतनाशत्रुरिति सुकरम् । ४ गरलायतानि विषभरितानि । ५ विषधेः समुद्रस्य सुता लक्ष्मीः । ६ विभिन्ना विकलिताः समग्राः सर्वाः सन्धिबन्धा यस्याः । ७ चक्रवाले मनुष्यसमूहे 'चक्रवालं तु मण्डलं' इत्यमरः । ८ गृहमध्यस्थं यदङ्गनं तस्य प्रदेशास्तेषु । ९ पय इति । पयःपिपासया समाकुला व्याकुला या यशोदा । पयो गृहीतुं गतायामित्यर्थः । १० किशोरो बालकः कृष्णः तस्य यौ मृदू चरणतलौ ताभ्यां सम्यक् ईरितः शब्दितः यो विशङ्कटः विस्तृतः विकटः समीपं प्राप्तः यः शकटः तन्नामादैत्यः तस्य झर्झरीभावं नाशम् । ११ अनभिभूतमक्लेशम् १२ अतिशयेनेत्यर्थः ।

मानमेनमर्भकं यशोदा कदाचिदुत्सङ्गसंगिनमाधाय वर्तमाना गिरि-
शिखरभरमिततत्कलेवरभरं निमिषमपि न विषेहे ।

कुक्षिस्था[1]खिललोकोयमबला[2] नन्दसुन्दरी ॥
विस्मयो विषयेप्यस्मिन् यदायन्त(?) तदा जनाः ॥९३॥
अद्भुतं परमास्थाय जननी भारपीडिता ॥
अवतार्य शिशुं भूमौ कर्मसु व्याप्ृता[3]ऽभवत् ॥९४॥
तृणावर्तः क्रव्यात्[4]तदनु कृतचक्रानिलतनु[5]-
र्यथातूलं[6] नीत्वा शिशुमुपरि भारार्दितगलः[7] ॥
व्यपश्यन्नोत्स्रष्टुं पृथुकरकनिष्पीडितगलो
गतप्राणः[8] प्रायाद्धरणिमिदमत्यद्भुतमभूत् ॥ ९५ ॥

तदनु यदुकुलपुरोधा[9] गर्गाभिधानो महामुनिर्वसुदेवनिदेशेन नन्दमन्दिरमधिगम्य यथाविधि समभ्यर्च्य ततस्तनययोरनुरहंस[10]मेव नामकरणमङ्गलं विधिवद्विधातुमारभत । ततः ।

रोहिणेयं बलो रामः संकर्षण इति द्विजः ॥
अवदद्वासुदेवोसौ कृष्ण इत्यभिनन्दयन् ॥९६ ॥
न पोतः[11] पोतोसौ[12] निरवधिकसंसारजलधे[13]-
र्न पाकः[14] पाकोयं[15] यदुकुलगलद्भलतपसाम् ॥
तथाप्येतौ पोतप्रकृतिमवलम्ब्याथ जगतीं
निजैर्लीलाजालैरहह विदधाते प्रमुदिताम् ॥ ९७ ॥

---

१ कुक्षिस्थाः उदरस्थिता अखिलाः सर्वे लोका यस्य एतादृशोयं श्रीकृष्णः । २ अबला बलरहिता स्त्री । ३ व्यापृता व्याप्ता । ४ क्रव्याद् राक्षसः । ५ चक्रानिलतनुः चक्रानिलः वर्तुलाकृतिर्वातः ‘ वावटळ ’ इति लोके तद्रूपः । ६ यथातूलं कार्पासवत् । ७ भारेण अर्दितः पीडितः गलो यस्य । ८ गतप्राणः । ९ यादवानामुपाध्यायः । १० एकान्ते । ११ पोतः बालकः । १२ पोतः नौः । १३ अपारसंसारसमुद्रस्य । १४ पाकः शिशुः । १५ पाकः पक्कदशा

यस्मिञ्छङ्करदारसौरभजरीजृम्भत्कटाक्षच्छटा-
पाताः कल्पलतावितानसुमनोगुम्फश्रियंभावुकाः ॥
तस्यासौ नवकालिदासविदुषश्चम्पूप्रबन्धामृते
पूर्वः काव्यविदां प्रकल्पितसमुल्लासो विलासो भवत् ९८॥

इतिश्रीमद्भागवतचम्पूकाव्ये कालिदासकृते प्रथमो विलासनामकस्तबकः ॥

---

## द्वितीयः स्तवकः।

मत्सर्वस्व मदीयजीवित ममप्राणाम्बताते ति तं
प्रेम्णा यन्न मुहुश्चुचुम्ब जननी यो वा हरिर्बालिशः ॥
स्मेरास्यः किमपि ब्रुवन्निजजनन्यालोकनादुल्लल-
ल्लीलाजालसमूलमादितनयस्तस्मै च तस्मै नमः ॥ १ ॥
गुणैरनवलम्बितां नियमिचित्तदोलाङ्गमा-
गमत्यजमणीयसीमसदनुच्चभावाश्रिताम् ॥
जगद्गुरुरपि श्रितः स्वयमवाप यः संमदं
चला धृतगुणा गुरुर्न किमु तस्य दोला मुदे ॥ २ ॥
यत्स्यादजेशामृतदं कराब्जं विगृह्य यद्वा मधुसारमादात् ॥
तत्सङ्गिनीमङ्गुलिमेष नित्यं बालो हरिश्चुम्बति नात्र चित्रम् ३॥
पुराभवे किंकरजातमात्रं यो मे कृशानुर्न शशाक दग्धुम् ॥
स मे कियानेष इतीव बालः स्प्रष्टुं हरिर्दीपशिखां व्यवस्यत् ॥४॥
मनोगतं स्वप्रतिबिम्बमाप्तुं चक्रे हरिर्यच्छिथिलं मनः प्राक् ॥
स्मृत्वेव तद्दर्पणगं स्वमाप्तुं बालो नखैस्तं शिथिलं व्यधित्सत्॥५॥

---

१ अजो ब्रह्मा इन्द्रःशंकरः ताभ्याममृतं दाति तम् । २ किंकरजातमात्रं भक्तजातिम् प्रह्लादम् ।

पुरातनस्याभिनवस्य वा स्याद्भक्तंस्य निर्वाणमथो मुकुन्दात् ॥
महोत्सवे क्वापि नवीनभक्तो बभूव निर्वाणममुष्य चित्रम् ॥ ६॥
चित्तेनिरुद्धस्य चिरं मुनीनां बद्धस्य वापि स्मृतितन्तुजालैः ॥
निरर्गलो निष्क्रमणोत्सवेन युक्तो मुकुन्दस्य शिशोः प्रमोदः ॥७॥
माता पिता त्वं भवसीति कस्याः प्रेम्णानुयुक्तः स यशोदयार्भः॥
तवेति यत्प्राह न तन्मृषाभूत्समीकृतं प्राकृतपोतवाचा ॥ ८ ॥
स्तम्भं सदालम्ब्य सदा गृहस्थं पादाम्बुदस्थात्सहजः किशोरः ॥
प्रह्लादवृद्धिः प्रलयेपि किं नु पितुर्न तस्यास्तु विलोकनेन ॥ ९ ॥
पदेपदे सस्खलनं स बालश्चचाल यत्तज्जयतु श्रिये नः ॥
सती गतिः संस्मरणेन यस्य मुग्धैरवापीति न चित्रमल्पम् ॥ १० ॥
स मन्दमन्दं विचचार चारु मुदा यदानन्दपदं तदस्तु ॥
प्राप्तैर्विपद्भावमपि प्रकाममुच्चैर्गतिर्यत्कलनेन गम्या ॥ ११ ॥
सती गतिर्यत्पदमात्रलभ्या यतस्ततोसौ न कथं नु हंसः॥
अतः स्फुटे कृष्णपदेप्यसुष्मिन्न धार्तराष्ट्रत्वमिदं हि चित्रम्। १२।
तत्पादपङ्केरुहमुद्रितासु भूमीषु लक्ष्म्या न कथं निवासः ॥
नवीनमेतत्स्थलपद्मगापि सरोजलक्ष्मीमतिर्याति सेति ॥ १३ ॥
अम्बाम्ब ताततेति वचांसि तूर्णं शिशुं प्रसूर्ग्राहयति स्म शौरिम् ॥
कदाचिदेनं न गिरः स्पृशेयुरिति श्रुतिः सा कथमाबभाषे॥ १४॥
यस्मिन्निदं कीर्णमशेषवर्णनिर्माणचातुर्यमनन्यलभ्यम् ॥
अशिक्षि कृष्णोपि समग्रवर्णपरिग्रहे सोयमिदं नवीनम्॥ १५॥
पाठानपि ग्राहयितुं रुणद्धि यदक्षरं गाढमनिश्चितो यः ॥

---

१ भक्तं अन्नं भक्तः परमेश्वरसेवी । २ निर्वाणं मुक्तिम् । ३ अनिरुद्धस परमेश्वरस पक्षे निरुद्धस्येति छेदः । ४ निष्प्रतिबन्धः । ५ आनन्दयुक्तं पदमित्यर्थः । ६ यस्य ज्ञानेन । ७ सम्यक्गतिः मोक्षः । ८ अतियाति उलङ्घ्यगच्छति । ९ प्रसूःमाता । १० 'वाचो यत्र निवर्तन्ते अप्राप्य मनसा सहे'ति श्रुतिः ।

स दम्भडिम्भः[1] कथमक्षराग्र्ये पलायदक्षो गुरुणा निरोध्यः १६
अयं गजोयं वृषभो ममेति स जन्तुभिर्दारुमयैरखेलत् ॥
यत्क्रीडनं प्रौढपदेष्युदारं काष्ठाश्रितेनैव[2] वृषेण चित्रम्॥१७॥
यदेषवत्सान्परिगृह्य रेमे तदस्य युक्तं खलु वत्सलत्वम्[3] ॥
विचारयन्तः कथमन्यथा तु जनार्दने[4] वत्सलतां प्रतीमः १८॥
रन्तुं सुधाकल्पमभुक्तकृत्स्नं सोयं प्रतिग्राससमुपासनाभिः ॥
निर्विघ्नतामेव हि मौग्ध्यमासीदजस्रतृप्तेस्तदहो न तस्य ॥ १९॥
यदर्थितो भोक्तुमसौ सवित्र्या[5] मुहुस्तदुद्वेलविलासमात्रम् ॥
भक्तानुरक्तः[6] कथमन्यथा तु स भक्तवैरस्यभरं[7] बिभर्तु ॥२०॥
उच्चैर्न्यधीयन्त पयांसि तस्य पयोमुषः प्रेक्ष्य च वामनत्वम् ॥
अपाहरत्तानि तथापि केन तस्यावगम्यं निखिलोन्मथत्वम् ॥२१॥

लब्धां स्वमातुरपि चौर्यवशादवाप्ता-
मास्वाद्य दुग्धलहरीमनवाप्ततृप्तिम् ॥
संस्मृत्य बालवनमालिनमाश्रितोसौ
दुग्धाम्बुधिं कुत इति व्यपिताल्पशङ्का ॥ २२ ॥
भूत्वा स्वयंविधुरपि[8] प्रकटं [9]रिरंसु-
र्येनासकृद्विधुमसौ[10] जननीं ययाचे ॥
दुष्प्रापतामतिरपि स्वपदाश्रितेस्मिन्
येनैव मौग्ध्यमिदमस्तु मुदां निदानम् ॥ २३ ॥
यदव्यक्तैर्वर्णैर्मधुरमधुरैर्व्याहररसो-
प्यहेतुर्हासो वाप्यतनु तदनु स्मेरवदनम् ॥

---

१ दम्भडिम्भः बालवेषधारी । २ काष्ठाश्रितम् दम्भकाष्ठयुक्तं पक्षे काष्ठरूपेणेत्यर्थः । ३ वत्सा विद्यन्ते यस्य पक्षे दयायुक्तत्वम् 'वत्सांसाभ्यां कामबले' इतिलच् । ४ जनार्दने जनार्दयति पीडयति स पक्षे श्रीकृष्णे । ५ सवित्र्या मात्रा । ६ भक्तानुरक्तः स्वभक्तप्रीतिकरः । ७ भक्तवैरस्यं अन्नविरसता । ८ विधुः विष्णुः । ९ रन्तुमिच्छुः । १० विधुं चन्द्रम् ।

निरुद्धो यत्प्रेम्णा प्रसरदरमानर्तितकरो
न तस्मै को नाम स्पृहयतु विलासाय जगति ॥ २४ ॥

पयः पीत्वा चौर्यादमृतमनिगूढं वितरतः
फलं हृत्वा किंचिन्निखिलफलजालानि ददतः ॥
मुषित्वेषद्वित्तं स्वपदमपि तेभ्यो वितरतः
कथं भूयस्तस्याविनयमपि न क्षाम्यतु जनः ॥ २५ ॥

पयः स्वादंस्वादं त्वरितमतिदूरं प्रसरतः
पुनर्मातुर्दुग्धैरनुनयनजातैरुपयतः ॥
घृतं क्षीरं दृष्ट्वाऽऽकलितवपुषस्तस्य हसितैः
सुखं लीलाजालैः कियदिव सवित्री न भजताम् ॥ २६ ॥

अकालुष्यं जज्ञे तदवयवधूलिव्यतिकरो-
प्यभूत्पङ्कापायस्तदुरुपदपङ्कच्छुरणतः ॥
अभून्निर्लेपत्वं[1] तदविरतलालाछुततया
यशोदायाः कस्मादिति खलु न विद्मः कथमपि ॥ २७ ॥

अनश्रुरुदितैरसावपभयैः पयःप्रार्थनैः
कराम्बरविकर्षणैर्[2]भुवि सरोषमुल्लुण्ठनैः ॥
असान्त्ववचनग्रहैरकृत विप्रियं यत्तदा
तपोनिचयसंचितं तदहितं जनन्याः कुतः ॥ २८ ॥

मातर्देहि पयः शिशो किमधुना वर्तेत दुग्धं कदा
तर्ह्यायातु पितृप्रसूः[3] किमधुना तातप्रसूर्जीवति ॥
नैषा तत्किमियं तमःप्रकटना[4] सा गर्भगेहे[5] स्फुटे-
त्यालापोऽस्तु यशोदिकातनययोर्नः श्रेयसे भूयसे ॥२९॥

---

१ निष्पापत्वम् । २ कराभ्यां यानि अम्बराकर्षणानि वस्त्राकर्षणानि तैः । ३ पितृप्रसूः सायंकालः 'सायंसंध्या पितृप्रसू'रित्यमरः । पक्षे पितामही । ४ तमःप्रकटना तमउद्भावनम् । ५ गर्भगृहे गृहमध्ये ।

गायन्ती विविधाः कथा मधुजितः पूर्वावतारश्रिता
दोलाचालनमादधे यदुदयोन्मोदा यशोदा शिशोः ॥
श्रुत्वैतत्सुखपारवश्यमभजद्यद्वासतोद्रिच्छला-
दाकल्पं वितनोतु नस्तदुभयं कल्याणपारंपरीम् ॥ ३० ॥

एवमतिदुर्ललितमपि कमनीयचरितं प्रतारितवल्लवयुवतिजनमविरतनवनीतचौर्यपर्युत्सुकमेनमर्भकं नियन्तुमपारयन्ती गोपातिसीमन्तिनीसंततिः संभूय तदीयमविनयं मात्रे न्यवेदयत् । सापि समनन्तरमतिमात्रपुत्रवात्सल्या तत्समर्पितमशेषमपि तदुपालम्भभावितमनाकर्णितकेन परिभूय तनयनियमनमनुरहसमभिनिनाय । ततश्च

आलोकैश्चकितैः सगद्गदरवैर्दीनैः सुधासोऽदरैरालापैरघसंघमार्जनपरैर्बाष्पोद्गमैर्दाम्भिकैः ॥
भीतिं नाटयतः समीक्ष्य वदनं मायाविनः श्रीपतेः
प्रेमार्द्राद्रमना मनागपि न सा वैरस्यमस्यातनोत् ॥ ३१ ॥

पायंपायं रुचिमपि तनोर्नूनबालेन्दुलीलां
श्रावंश्रावं गिरमपि सुधासारसारामुदाराम् ॥
चुम्बंचुम्बं मुखमपि तनूजन्मनः सानुरागं
श्लेषंश्लेषं तनुमपि न सा सौहितीमाललम्बे ॥ ३२ ॥

अथ कदाचन व्रजनिवासिनः सब्रह्मचारिणः सकलबालकाः संभूय यदुनन्दनश्चखाद मृदमिति यशोदायै न्यवेदयन् । सापि तदुदितनिशमनादनुनियमनकामनया सरयमपवार्य अयि भो दुर्ल-

१ आन्दोलनम् । २ कमनीयचरितम् मनआह्लादकारि आचरणम् । ३ नियन्तुं नियमनं कर्तुम् । ४ अपारयन्ती पारं न प्राप्नुवन्ती । ५ गोपतयो बल्लवाः तेषां सीमन्तिन्यस्तासां संततिः समुदायः । ६ मात्रे यशोदायै । ७ उपालम्भभावितं सनिन्दात्वेनोक्तं । ८ अश्रुतत्वेन । ९ अन्ववतप्ताद्रहसइति अच्प्रत्ययः । १० अवलोकनैः । ११ पालरूपधारिणः । १२ पीत्वापीत्वा । १३ श्रुत्वाश्रुत्वा । १४ सुधाया आसारो धारा तस्याः सारमिव सारं यस्मिन् । १५ पुत्रस्य । १६ सप्रेमम् । १७ पुनःपुनरालिङ्ग्य । १८ तृप्तिम् । १९ शिक्षां कर्तुम् ।

ल्ति किमिदमाचरसीति सरोषमुपालभत् । सोपि सप्रश्रयैमनन्त-रमयि जननि न विश्वसिहि विश्वमपि तदीयमालापमैालाकलापम-वधारय जनमिदं सासूयमित्यभिधाय व्यादैाय च वदनमद-र्शयत् । यशोदापि प्रतिवदनमनालोकितचरमशेषमपि चराचरम-वलोक्य विस्मयमानमानसा परमपुरुष एवायमिति तत्क्षणमनुसं-दधाना पुनरपि मोहगहनमवगाह्य पूर्ववत्स्तनपानशालिवनमालिनं बाल्यलीलाविलासिनमलोकत। अथ कदाचन तूर्णमपरिपूर्णपयँ:पान-दाननिदानकदधिघटविघटनघटितशेषाटोपसमुदयया सदययापि यशोदया समुद्वेजितः सपदि यदुनन्दनः सरयमतिदूरमपासरत् । त-दनु तमवधावमानयाऽनया विचित्रतरचङ्क्रमणचतुरतरमतिमतिरु-चिरगर्भाशयमर्भकमवलम्बितुमपारयन्त्या परिणतवयोविगतवेगग तिश्रिया परिश्रमः परमनुबभूवे । स्थाने हि तत् ।

जङ्घालतायामुपमानभूतं मनोपि यन्न प्रभवेद्गृहीतुम् ॥
कथं नु गृह्णातु तमेनमेषा सदानवं या वलयं दधाना ॥३३॥

ततः ।

मत्वा विना योगमलभ्यमेनं स मौनमालम्ब्य गतिं निगूढाम् ॥
करेण जग्राह कथंचिदेषा ततो विमुक्ता क इव प्रयत्नः ॥३४॥

आदाय च तमेनमुपधिरुदनसकज्जलजलाविलमुखकमलमुलू-खलसीमनि बद्धुमारभत ।

पर्याप्तिभावं बहवोपि यस्य बन्धे गुणा नैव ययुस्तदानीम् ॥
तत्कर्मणा विस्मितया तयाथ बद्धो गुणातीततनुः कथंचित्॥३५॥

तदनु यदुपतिरपि पूर्णप्रेमगुणानुगुणगणसमलंकृतशरीरः पुरा-

१ सवेगम् । २ आलापमालाकलापम् भाषणसमुदायम् । ३ प्रसार्य । ४ इ-च्छान्यूनं यत्पयःपानदानं दुग्धदानं तदेव निदानं कारणं यस्य तत् दधिघटविघट-नं दधिभाण्डस्फोटनं तेन घटित उत्पन्नः शेषः किञ्चिय आटोपो रागः तस्य समु-दयो यस्यां तथा । ५ विक्षोभितः । ६ अतिवेगतायां गणितम् । ७ गुणाः सत्त्वा-दयः पक्षे रज्जवः ।

विषमेशरसंगरसंगतविगतसिचयनिचययुवतिशतपरिवृतावपटावृतकलेवरौ तत्क्षणमेव तदवलोकनासहनकुपितपितामहसुतविश्राणितशापव्याजोपनतार्जुनमहीरुहभावौ मणिग्रीवनलकूबरपदाभिधेयौ नरवाहननन्दनौ मन्दिराजिरपरिसरपरिवर्तिनावनुजिघृक्षुरक्षतदयोदयः सलीलमेवोलूखलमन्वाकृष्य तत्समीपमुपससर्प॥

साचीभूतमुलूखलं विधिवशादाकृष्य शैलोपमं
तस्मिन्सत्वरमन्तरातरुयुगं साटोपमाधावति ॥
तत्संरम्भसमीलनान्निपतितौ क्षोणीरुहौ तत्क्षणं
तेनाभून्निबिडीकृतं पटपटध्वानेन रोदोन्तरम् ॥ २६॥

बन्धो यदुतनूजस्य मुनिशापविपन्नयोः ॥
अभवद्बन्धमोक्षाय यक्षराजतनूजयोः ॥ २७ ॥

तौ ततः कृपया शौरेः प्रकृतिं समतीत्य ताम् ॥
उपगम्य निजं रूपमाश्रितौ गतिमुत्तराम् ॥ २८॥

अथ नन्दगोपपुरोगमाः प्रावृषेण्यपयोवाहनिवहनिर्घोषपारंपरं स ब्रह्मचारिणमाकस्मिकमनोकहपतनसंभूतपटपटारावमभ्यर्णमाकर्ण्य किमिदमुपस्थितमतिभयानकमिति विस्मयपरीतमतयस्त्वरितमापत्य शतधारविदारितमिव धराधरशिखरमालिङ्गितमहीतलमर्जुनमहीरुहयुगुलमन्तरतरुयुगुलमुद्घूर्णमानमुलूखलानिबद्धमकुतोभयमर्भकमपिनिजमवलोक्य सकलमेतदर्भककृतमिति परिसरविसरदर्भकभणि-

---

१ विषमशरसङ्गरं मदनयुद्धं तदर्थं सङ्गतं समूहीभूतं विगताः सिचयनिचया वस्त्रसमूहाः यासां ता युवतयस्तासां शतं तेन परिवृतौ अवगतौ पटौ याभ्यामेवंभूते आवृते व्याप्ते कलवरे ययोस्तौ।२ पितामहसुतो नारदः। ३ कुबेरपुत्रौ। ४ गृहाङ्गणाभ्यन्तरवर्तिनौ। ५ अनुग्रहं कर्तुमिच्छुः। ६ तद्वृक्षसमीपम्। ७ पटपटध्वानेन पटपटइतिशब्देन। ८ मूलरूपम्। ९ प्रावृषेण्याः प्रावृषिभवः प्रावृषेण्यः। 'प्रावृष एण्यः' इति एण्यः। १० अभ्यर्णे समीपम्। ११ शतधारं वज्रं तेन विदारितं छिन्नम्। ११ समीपवर्ति गोपबालकोक्तयाम्।

त्यामसंभूतविस्रम्भाः[1] ससंभ्रममदभ्रत्वरेण[2] विमुच्य कौतुकजुषं बालवपुषमानन्दपुषमनन्तायुषमात्मजविशेषमुत्पातशतपरीतं पदमिद[3]मनिवासयोग्यमिति योग्यधीतन्त्रैः संमन्त्र्य मन्त्रिभिः सद्य एव शृङ्गवाद्यनिनदमासाद्य निजधनप्रधानभूतं गोधनजातमपि पुरोविधाय कुम्भिनीरम्भायिताभिराभीरभीरुभिः सममशेषवस्तुजातमपरिच्छदमधिरोप्याधिशकटमतिविस्मयनीयकामनीयकमस्पर्धाभिधानगोवर्धनधराधरख्यातिमनोरमं कैलासमिव नीलकण्ठनिलयं[4] वैकुण्ठमिव हरिनिकेतनं[5] सत्यमिव नित्यानुरक्तपद्मासनं[6] स्वर्गोर्वीभागमिव सकलस्पृहणीयसुरागं चतुराननमिव सकलागमशेवधिं[7] पीताम्बरधरमिव विशेषशोभितं शीतांशुमौलिमिव पर्वतभुवालंकृतवामभागं सहस्राक्षमिव सहस्राक्षविराजितं[8] यामुनपुलिनलोभनीयं[9] साधुवृन्दावनोद्देशं वृन्दावनदेशमविशन् ।

वृन्दावनपदे दीनवृन्दावनपरायणाः[10] ॥
गोपा विचारयन्ति स्म गोपालनकृते व्रतम् ॥ ३९ ॥
तौ ततः पितृनिदेशतः सुतौ वत्सपालपदमस्य[11] तिष्ठतः ॥
तद्विहाय वसुदेवसन्निधिं गोपमन्दिरसमाश्रितेः फलम् ॥ ४० ॥

---

१ असम्भूतविस्रम्भा अनुपजातविश्वासाः । २ अदभ्रत्वरेण अतिवेगेन ३ पदं स्थानम् । ४ नीलकण्ठनिलयं शङ्करस्थानं पक्षे नीलकण्ठा मयूरास्तेषां निलयमावासस्थानम् ।५ हरिनिकेतनं हरेःश्रीविष्णोः निकेतनं स्थानं पक्षे हरीणां सिंहानां निकेतनम् । ६ नित्यानुरक्तपद्मासनं नित्यं अनुरक्तानि पद्मानामासनानि स्थानानि यस्मिन्पक्षे स्पष्टमेव । ७ सकलागमशेवधिं सकलवेदपरिपूर्णं पक्षे सकलस्थानशोभायमानम् । ८ सहस्राक्षविराजितं सहस्रनेत्रालंकृतं सहस्रशः अक्षैः अक्षवृक्षैरलंकृतम् । ९ यमुनातीरसैकतशोभायमानम् । १० दीनानां वृन्दानि समुदायाः तेषामवने रक्षणे परायणाः । ११ वत्सपालपदं वत्सरक्षणाधिकारम् ।

अरमत मुरवैरीमल्लयुद्धैस्तदाय-
तुमुलयुधि विधातुं शीघ्रचाणूरघातम् ॥
यदपि मुहुरखेलत्कन्दुकैर्गोपकान्ता-
कुचकलशविमर्दप्रौढयस्तत्कृतानु ॥ ४१ ॥

विषविवर्तपदग्रथितार्थयोर्वृषभवेषभृतोः शिशुचापलात् ॥
गुणसमुन्नतयोर्न तयोः परस्परसलीलविलङ्घनमद्भुतम्॥४२॥

सकलसत्त्वगुणास्पदता ययोरविषया न तयोरितयोगयोः ॥
निखिलसत्त्वरुतानुकृतिक्रियाविलसितोपनतं सुखमद्भुतम्।४३॥

इत्थमतिशयितशकृत्करिपरिपालनविलासलालसमासादितानन्दमादृतपितृनिदेशं हृषीकेशमभिबुभुषुरुग्रसेनसुतनियन्त्रितस्त्वरितमाजगाम कुत्सापदं वत्साभिधानो यातुधानः ।

हिताहितज्ञानविशेषशून्यः पराशनायागत एष वत्सः ॥
ततोनु गोविन्दभुजोरुदण्डनुन्नस्तृणावर्तपदं प्रपेदे ॥ ४४ ॥

बकोपि तदनुयदुनन्दनपरिबुभूषया सत्वरमागत्य पूतनासाहचर्यमनार्यधीरलभत ।

हंसं सन्मानसावासमाश्लिष्टकमलाकरम् ॥
विहारं बलसंवृक्तं बकः परिभवेत्कथम् ॥ ४५ ॥

मुष्टीमुष्टिविहारसारसरसा गोपालबालास्तदा
जातास्तेन पराजिताः किमिदमित्याश्चर्यपर्याकुलाः ॥

---

१ शकृत्करिर्वत्सः । २ अभिभवितुमिच्छुः । ३ कंसप्रेरितः । ४ तृणावर्तपदं तृणसमूहं नाशमित्यर्थः । अथ वा यथा तृणावर्तो नाशं प्राप्तस्तथेत्यर्थः ।५ सन्मानसावासं सतां साधूनां मानसेषु अन्तःकरणेषु वासो यस्य पक्षे सद् यन्मानसं तन्नाम सरोवरं तत्रावासो यस्य।६कमला लक्ष्मीः पक्षे कमल-आकर इति च्छेदः। ७ बलः बलिरामः पक्षे बलं ओजः । ८ बकासुरः पक्षे तन्नामा पक्षी । ९ मुष्ट्या मुष्ट्या प्रहृत्य प्रवर्तते इति ‘तत्रतेनेद’ मिति समासः । ‘इच् कर्मव्यतिहारे’ इति समासान्त इच् । ‘अन्येषामपि दृश्यते’ इति पूर्व पदस्य दीर्घः ।

गूढं तस्य चतुर्भुजत्वमपि वा सत्त्वैकसंवासितां
वैदग्ध्यं च बलिप्रतारणविधौ को नाम जानातु तत्॥ ४६

यामुनेषु पुलिनेषु स शौरिः सेतुबन्धविधिभिर्यदरंस्त ॥
तत्पुरा परिपयोनिधिसेतोः स्पष्टमारचनवासनयैतत् ॥ ४७ ॥

एवमनेकविधाभिरानकदुन्दुभिनयनाम्भोजदुर्लभाभिराभीरशावक-भागधेयपरंपरापरिणतीभिरम्भोजसंभवप्रमुखबर्हिर्मुखलोभनीयाभि-र्भलीलाभिरशेषभुवनमानन्दयन्तावाश्विनेयाविव वसुन्धराज्वरचि-कित्सनाय मव्यमलोकभाजौ मदनमाधवाविव वनविलाससंचारिणौ-जयन्तनलकूबराविव भूरम्भाविलोकनकुतूहलिनौ हलिवनमालिसम-भिधानाविष्टापूर्तजन्यसुकृतसंचयाविव मूर्तिमन्तौ रामणीयकसर्वस्व-विश्रामैकधामानौ वत्सपालनाय विपिनवर्त्मनिवर्तमानावतिमञ्जु-गुञ्जामणिपुञ्जरञ्जितावतंसितनानाकुसुमदामसमुदायौ वनदेवताभिर-पि लतापिहितरूपाभिरतनुविस्मयमवलोक्यमानौ परिश्रिताभिरा-भीरकिशोरराजीभिरनुगम्यमानौ तावेतो रोहिणीयशोदानन्द-नावव्यक्षयन्नतिरूक्षः क्षणदाचरः कश्चिदघमूर्तिरघाभिधा-नोऽसन्निधानसोदरनिषूदनसञ्जातवैरनिर्यातनधृतवासनो निज-नाशनमविदन्मन्दमतिरमन्दसाहसः किमपि महामहीधराडम्ब-रविडम्बि बिलेशयकलेवरमालम्ब्य व्यादाय वदनमनुविपिन-मवतस्थे । अथ तमेनमाभीरशावकाः सर्वेपि निर्विज्ञ्यापि कमप्य-दभ्रविभ्रमभ्रमसंभ्रमतया वृन्दावनसदेशवास्तव्यमस्तोदयपर्वतमि-व सर्वतो वर्तमानमवनिधरं मन्वानाः सन्त एवं न्यध्यायन्त य-

---

१ बलिर्बलवान् बलिः प्रल्हादपिता च । २ आभीरशावका गोपबालकाः । ३ अम्भोजसम्भवो ब्रह्मा तत्प्रमुखा बर्हिर्मुखा देवास्तैर्लोभनीयास्ताभिः । ४ इष्टापूर्तं यज्ञकर्म ते जन्यं यत्सुकृतं पुण्यं तस्य संचयो राशी । ५ वैरशुद्धिः । ६ बिलेशयकलेवरं सर्पभोगम् । ७

द्रिरिवायमुरःसरत इव तदीयकन्धरोदरमाननविवरमिव गह्वरपरिसरवर्ति गण्डोपलयुगुलमपि दंष्ट्रायुगमिव तदन्तरपरिदृश्यमानघण्टापथसरणिरायत्तारसंज्ञेव तत्रत्यदावपावकौपाचितसमीरणः श्वासानिलप्रसार इव दहनदग्धनानाविधसत्त्वदुर्गन्धोशितोज्झितपूतिगन्ध इव शिखरोपरिघूर्णमानमदभ्रमुदपोस्त्रकरकिर्मीरितमभ्रपटलमिदं निजफणामणिकिरणनिकुरम्बमिव नितान्तव्यात्तमुखाजगरवदभिमुखतया गिलितुमस्मानिव कोयमुत्सुक इति परस्परमुत्प्रेक्ष्यमाणा निरीक्ष्यमाणाः पुनर्यदि तादृगेवावितथोऽयं जन्तुर्भविता तर्हि बकलावं लाविष्यति बलाग्रज इति साकूतस्मितकरतालिकाताडनमधोक्षजमवलोकयन्तः सत्वरमविमृश्यसहशकृत्करिभिरदसीयवदनोदरप्रदेशमविशन् । भगवानपि तस्य मायाविनो मायानुभावं विभावयन् सतीर्थ्यकुशलमचिरेणालोचयंस्तदीयवदनकोटरमुटजं जटावानिव स्वयमपि समायासीत् । तत्र खलु ।

वेगादाननकन्दरान्तरगतस्त्रैविक्रमं प्रक्रमं
चक्रे चक्रधरस्तदानियमितश्वासानिलापूरणः ॥
तेनासौ बलिचक्रवर्त्यपि ततो मुञ्चन्नथ प्रस्थितं
निर्यत्प्राणसमीरणश्चिरपथादातिष्ठदुच्चैःपदम् ॥४८॥

विमुच्यते येन हरेः प्रसादादानन्दमासीत्परमं नराणाम्॥
बुधैरपि प्रीतिरहो विशाला कथं न सिद्धा न इति व्यधायि॥४९॥

अथ सङ्क्रान्तया तदीयतेजःसम्पदा सम्पन्नः कृतान्तनिशा-

१ निकुरम्बः समूहः । २ शबलितम् । ३ लाविष्यति छेत्स्यति । ४ सतीर्थ्यकुशलं मायाविना मया सह कपटं कर्तुमागतमिति भावः ।

न्तादिवत्तदीयवदनकन्दरादनाश्लिष्टविषलेशस्पर्शैरापतद्भिः सवत्सैर्वत्सपालैरसकृत्समभिनन्द्यमानस्तदपदानमुदितादिविषदुपवर्षितमन्दारकुसुमवृष्टिभिरभ्यर्च्यमानः सुदर्शनकरः कमपि वचनानविषयं हर्षभरमभजत ।

अववदनाविमुक्तैस्तत्र गोपालबालै-
स्तटभुवि यमुनायाः सादरं सेव्यमानः ॥
अविरतपरितृप्तोप्येष शौरिः सजग्धि
व्यतनुत ललिताभिर्नन्दयन्नर्मवाग्भिः ॥ ९० ॥

कूरं मुरारिकमनीयकरोपदेश-
माधाय भाजनपुटेषु सुधावतीति ॥
मुग्धा तदा निजनिजांशरुचिं प्रकाश-
माचामति स्म सुरभीशकिशोरराजिः ॥ ९१ ॥

गोपालबालकुलसङ्कुलमूर्तिरेष
वेषं पुपोष पुलिने नलिनेतराभम् ॥
राकासुधाकरकरप्रकरस्य तारा (?)
ताराग्रहैः परिवृतस्य स मध्यभाजः ॥ ९२ ॥

प्रभूतमधुसूदनप्रियकथासुधामाधुरी
विजृम्भपरिरम्भजंप्रमदभूमविस्मारितौ ॥
तदा न बुबुधेतरामतिदवीयसीमप्यसौ
शल्ककरिपरम्परां सुरभिपालबालावलिः ॥ ९३ ॥

समनन्तरं समन्ततः प्रसार्य लोचनमवलोकनपथमतिक्रान्तं वत्ससंचयमनालक्ष्य वैलक्ष्यविषादकवलितेषु वत्सपालेषु निखिलाभीरबालेषु ।

---

१ अपदानं नाशः । २ राका पूर्णचन्द्रयुक्ता पौर्णिमा 'पूर्णे राका निशाकरे' इत्यमरः । ३ तारा श्रीः कान्तिरित्यर्थः । ४ अलक्ष्यदुःखव्यासेषु ।

यशोदादायादो[1] निरवधिपरीतापलहरी-
परीतानातन्वन्सपदि मुदितान् गोपतिसुतान् ॥
विचिन्वन्वत्सानां चरणसरणिं[2] मङ्क्षु गहनं
जगाहे भक्तार्तिच्छिदुरमधुरस्मेरवदनः ॥ ९४ ॥

तमेव समयमम्भोजसम्भवः[3] सरभसमघासुरावष्टम्भसम्भारविघटनसमयमनुभूतमपि भगवतश्चतुर्भुजस्य महिमानुभावमसम्भृतविश्रम्भतया भूयोपि विभावयितुकामः समापत्य नित्यं सत्याधिष्ठितोपि मोहाक्रष्टः सवत्सान्वत्सपालानपाजहार । भगवानपि विपिनसीमनि विचिन्त्य चिरतरमलब्धवत्सोपलब्धिः पुनरपि पुलिनोपकण्ठमासाद्य तत्रतत्र वत्सपालानपि अनध्यक्षयन् मुहूर्तमात्रमिव चित्रीयमाणचित्तः कलनमेतदपि कमलसम्भवदम्भसम्भूत[4]मिति दिव्यचक्षुषा साक्षात्कुर्वाणस्तत्तत्क्षणमेव तदुभयात्मकमात्मानमकल्पयत् ।

वत्सास्ते वत्सपाला यदुतनयमयाः सायमासाद्यकाले
सद्म स्वप्रेमपूर्वं परिपुपुषुरमी पूर्ववत्स्वस्वमातुः ॥
यावत्संवत्सरान्तं विधरणपरतामस्य गूढामपागा-[5]
द्रामो वा नैव चित्रं विकृतिरुदभवत्तेषु न प्राग्दशायाः ९५

गवां गोपालानामपि निजनिजापत्यविषयं
निपीय प्रेमाणं निरवधिमनास्वादितचरम् ॥
बलोपि स्मेरान्तःकरणसरणिर्वर्षविरतौ
कथं चित्तानेतान्मुररिपुविवर्तान्निरचिनोत् ॥ ९६ ॥

तथाहि ।

---

१ दायादः पुत्रः 'दायादस्तु भवेत्पुंसि सपिण्डे तनयेपि च । २ पादपङ्क्तिम् । ३ ब्रह्मदेवः । ४ ब्रह्मदेवकपटभवम् । ५ ज्ञातवान् ।

जगज्जीवाभेदस्फुटनपरयैव श्रुतिगिरा
निरस्तं द्वैतं ते स्वगतमति नैवाद्भुतमिदम् ॥
तथापि प्रागल्भ्यं त्वयि भजति यत्त्वं च जनिता
तदस्माकं मायाकवलितहृदां वञ्चनकला ॥ ५७ ॥

सतो दुःखं नातो न हि सुखमसद्वो तव विभो
फलं साक्षात्कारादपि तु निजरूपेण भवनम् ॥
अमत्वेदं तत्त्वं किमु विफलमुद्दिश्य भजता-
मबोधानां प्रान्ते फलमुपनतभ्रान्तिविलयः ॥ ५८ ॥

पुराणस्त्वं माया तव च गृहिणी त्वं च नितरा-
मसंगः सापि त्वां स्पृशति न कदाचित्प्रणयतः ॥
तवेयं सान्निध्यात्परमपि तु सूते जगदिति
प्रवादोयं मिथ्या न भवति कथं निश्चितधियाम् ॥ ५९॥

मनः स्वैरं लोके विहरदुपरुध्यामितफले
प्रकल्प्याशां बोधाङ्कुरभरणकृत्ये नियमयन् ॥
फलाम्बुञ्जे तस्यामृतमयमुपान्ते जडमिति
प्रतार्येदं माया कथमिव निवर्त्योत्तव जनैः ॥ ६० ॥

पुराणस्त्वं माया प्रकृतिरसती हन्त निखिला
जडास्त्वत्तो जाता इति तव जगत्यामपि विभोः ॥
न संसारे सौख्यं यदिह रुचमुच्चां विघटयन्
करोषि त्वत्तुल्यं श्रितमपि नवीनं तु तदिदम् ॥ ६१ ॥

तवापाङ्गैस्तुङ्गैः सरसिजविलासप्रतिभवै-
र्दयासारैः सारैरमृतरसकल्लोलमधुरैः ॥

---

१ अज्ञात्वा ।

प्रतप्तं सिक्तं मां विरचय यदज्ञानविधया
कृतं वा चापल्यं तदपि सपदि क्षाम्यतु भवान् ॥ ६२ ॥
विरञ्चि श्रेयसां दायं धायं त्रिजगतामिति ॥
स्तुत्वैवमखिलेशानमगमत्पदमात्मनः ॥ ६३ ॥
करुणावरुणालयस्ततोसौ हरिराश्वास्य वयस्यवत्सपान् ॥
व्रजमापततोपदानमस्य व्रजसीम्नि प्रससार विस्मयाय ॥६४॥

अथ कदाचन विपिनशुण्डाले[1]शुण्डादण्डाघातसमुद्घूर्णमानानोकहनिवहशिखरकुसुमकोटरोदरसमुच्चरदमन्दमकरन्दबिन्दुसंदोहमेदुरीकृतबन्धुरगन्धरसगर्भितस्वगातिविभ्रमैः कलिन्दनन्दिनीकल्लोलमताल्लिकामालिकासलीलसलिलोच्चलितपतत्रिपत्रसंभूततुषारपृषत्कदम्बकरम्बिताकारैरुरगपरिवृढविवर्तीभूतसङ्कर्षणसंसेवनायानुवेलमतुलमहाशैलवेलावननिवासिनीभिरुरःसरविलासिनीभिरादरादिव समाहृतैरुदरविसरदासवास्वादमदशब्दायमानचञ्चरीकनिचयवाचालितविकचकुटजचाम्पेयमचर्चिकापरिचयसमुच्छ्रितामोदैर्वनदेवतावदनमारुतपरिरम्भजृम्भितैर्बालानिलैरुपलाल्यमानं नन्दनवनमिव सहे[2]रिनन्दनं सदनुग्रहमिव सकलाविकलाभिलषितफलास्पदं वृन्दावनान्तरालगतं तालवनमनुचरविवृत्ताभिरभ्यर्थनाभिः संकर्षणमधुधर्षिणौ सरभसमभजताम् । तत्र खलु ।

पूरयन्नारवैर्यातो रोषनाडिन्धमैर्वनम् ॥
रामः स[3]वयसां तुष्ट्यै फलभारमपातयत् ॥ ६५ ॥
तत्र तालफलपातकजन्मा कोप्यभूच्चटचटध्वनिरुच्चैः ॥
तन्निशम्य कुपितः खलरूपो धेनुकः सपदि सन्निदधे तम् ६६॥

---

१ शुण्डालो हस्ती 'प्राणिस्थादातो लजन्यतरस्याम्' इति मत्वर्थीयो लच् । २ जयन्तेन साकं पक्षे नन्दनमानन्दः । ३ सवयसां मित्राणाम् ।

असौ वत्सापायं व्यथितहृदयो धेनुकपदः
पदं वत्सस्यैव त्वरितमथ निन्ये हलभृता ॥
शशंसुस्ते वा बालास्तदनुकृतसाकूतहसिता
बलं हर्षोत्कर्षादयमबलजय्यः कथमिति ॥ ६७ ॥

तदनु तदनुचरैनिकरमपि खरतरफेरववेषभीषणमतिरोषेण रामकेशवौ समूलकाषमकषताम् ।

ततोनुभुञ्जन् स पृथक्कृजनेन कदर्थ्यमानानमलां प्रकर्षाम् ॥
सहोदरीपापिनियामकस्य गोपैः प्रतस्थे पुरुषोत्तमस्ताम्॥६८॥

तत्क्षणमेव खरतरखरकिरणकिरणसम्पातसम्पादितपरितापातिरेकसमुदितोदन्यातिप्रसङ्गसङ्गतकालियव्यालनिष्ठ्यूतनिरर्गलगरलशबलितकलिन्दनन्दनासलिलरसनास्वादमूर्च्छालेषु सवत्सेषु वत्सपालबालकेषु ।

कारुण्यामृतपूरसारभरितैस्तुङ्गैरपाङ्गैर्मुहु-
रासिञ्च्य स्वपदाम्बुजैकशरणानेतान्समुज्जीवयन् ॥
मध्ये यामुनवारिभूरिगरलज्वालावलीढान्तरं
सार्पं सद्म विवेश सारशिखराह्लीलाकुलायो हरिः ॥६९॥

स्वभवनपरिभवसंभवरोषादायादथाशु भुजगेन्द्रः ॥
मुररिपुमुरुरुचिचरितं घोराकारैर्ददंश दशनैस्तम् ॥ ७० ॥

शौरिराप भुजंगविषाग्निज्वालजालजनितां परिक्षतिम् ॥
चक्रिणोर्यदि परस्परयुद्धं क्ष्वेडतो हि न तदान्यतमार्तिम्॥७१॥

---

१ वत्सविघ्नम् । २ धेनुकाख्यः । ३ कालस्य । ४ बलिरामेण । ५ अनुचरनिकरं भृत्यसमुदायम् । ६ फेरवा रक्तप्राशका राक्षसा इत्यर्थः । ७ खरकिरणः उष्णकिरणः सूर्यः । ८ उदन्या तृषा । ९ लीलाकुलायो लीलास्थानम् । १० विष्णुसर्पयोः ।

स्पन्दितुं[1] स न शशाक तदैव श्रीपतिर्भुजगभोगपिनद्धः ॥
चित्रमेव तदिदं कथमस्मिन् युज्यतां भुजंग[2]भोगजबन्धः ७२॥

तदा बालास्तस्मिन्नरिपरिभवं बन्धमपि त-
त्कृतं दुःखं मोहाद्वितथमविदित्वा जडधियः ॥
कथं वा मुक्तिः स्यात्कथमिव तदध्यक्षजनित
सुखं नश्येतो वा विरमति कथं वेति विवशाः ॥ ७३ ॥

भगवानपि क्षणमात्रमबलभावमभिनीय नितान्तचिन्तादन्तुरितान्तरङ्गेषु सहचरेषु सचमत्कारमुत्प्लुत्य मुहुर्मुहुश्चरणघातमाहत्य भुजङ्गममतिमात्रं संमर्दयामास । ततः प्रयाणोन्मुखप्राणप्राणेशं निशम्य तदङ्गनाजनः ससम्भ्रममधोक्षजं शरणमभजत् सविनयमनंसीच्च । तथा हि ।

कृतं मात्सर्येण स्मरणमपि निर्वाणकरणं[3]
हरत्योद्देशाद्ग्रहणमपि नाम्नो भवभयम्[4] ॥
पयो वा पत्रं[5] वा हितमहह भक्तैरुपहृतं
हरे पारं विद्मो न तव करुणायां निरवधेः ॥ ७३ ॥

प्रियां प्राणप्रायां क्षणमपि विनाभावविरसां
ययौ हित्वा यानं निभृतमनुजीविव्रजमपि[6] ॥
अयासीत्संभ्रान्तः सपदि करि[7]दीनारवभरै-
र्हरे श्रेयोसौ नः फलतु तव कारुण्यलहरी ॥ ७४ ॥

दीनात्मनां तावकनित्यसिद्धरसप्रभावादपराधरीतिः ॥

---

१ स्पन्दितुं चलितुम् । २ भुजगा जाराः । ३ मोक्षहेतु । ४ संसारभयम् । ५ 'पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छती'ति गीतावाक्योद्धारः । ६ आत्मीयजनसमुदायम् । ७ करिणो गजेन्द्रस्य दीना ये आरवा ध्वनयः तेषां भराः समुदायास्तैः ।

कल्याणभावाय न कल्पते चेदनर्थलाभः कथमस्तु वार्यः[1]॥७५॥

अनात्मज्ञस्थाने शुचमयमयासीद्विभुरिति
स्वरूपं मत्वा ते सपदि परिपुष्णात्युपशमम् ॥
परीभावे शोके यदि तु पुनरद्यापि भजति
प्रतीतिः कोयं ते निरवधिकृपानीरधि[2]रिति ॥७६॥

स भोगिचूडामणिरेष नाथो वयं च भोगिन्य इति प्रतीतिः ॥
घटेत नैतत्किलभोगभाक्कं कृपां विना ते गरुडध्वजस्य ॥७७॥

त्वयि नाथेपि जगताममुना नः सनाथता ॥
तेन नः करुणासिन्धो हर सौभाग्यविप्लवम् ॥ ७८ ॥

एवमभिधाय बाष्पायमाणनयनाभिरजगरवधूटीभिरार्द्रीकृतचित्तवृत्तिः कारुण्यकल्लोलमाली वनमाली तथेति तत्क्षणमुररीकुर्वाणः सत्वरमुपसर्पतु पयोनिधिमिह न निवसतु निमेषमपि भवान्भवतु निर्विषोदकासावतुलमत्कृपाफलमनुभवतु चामृतासारधोरणीं तरणिनन्दिनीति दन्दशूकनायकमादिश्य[3] तद्विहितविविधमणिमयसपर्यापर्यायमतिहर्षेण निजवर्ष्मणि[4] परिधार्य धैर्यकुलाहार्यवर्यः सूर्यसुतातटवनप्रदेशेपि निरतिशयस्वविरहासहसमीरसमीरितं निजजनकजनबहलं कोलाहलहालाहलजालानलं निजगमनामृतसारधारानिकरेण निरस्य[5] नितरामापीय च तत्रैवार्धरात्रसमुदिताप्तजनत्रासादारण्यवह्निमह्नाय[6]निजरूपनिह्नवचटुलचरितमालः सलीलमनन्तप्रेमालंकृतो निरातङ्कः पङ्केरुहलोचनः साकं तैरानन्दतुन्दिलैर्नन्दप्रमुखैर्निखिलाप्तजनैरात्मसदनमनुमोदमानगोकुलं गोकुलमास-

---

१ वारणीयः । २ नीराधिः सागरः । ३ दन्दशूकनायकं सर्पनायकं कालियम् । ४ निजवर्ष्मणि निजदेहे । ५ नाशयित्वा । ६ अह्नाय झटिति ।

साद । अथ कदाचिदुचितकरुणकरणरणानिःसाणरणनकल्पानल्पशिलीमुखपटलझङ्कारकरम्बिताकारतया वनदेवताभिरिवावहितविविधकुशलानुयोगाभिरुन्मीलितमल्लिकामतल्लिकापाटलपटलपरिशीलनशीलाभिरनवरतजागरूकधारायन्त्रानिरर्गलनिर्गलद्वारिधाराविरचितलीलाविहाराभिरतिवेलतरलशिखरतया वनराजिभिरिव सानन्दमभिनन्द्यमानसमागमनाभिः प्रतिदिशमनशनायितसरीसृपचर्व्यमाणतयेव विरलप्रसराभिर्मलयबालानिलमालाभिः कथंचन संधार्यमाणप्राणिसंदोहः स्वकीयपरितापातिरेकसहमानाभिरिव प्रतिबिम्बदम्भादभ्यन्तरमवगाहमानाभिरहिमकरकिरणपरंपराभिर्मन्दोष्णीकृतसकलसलिलाशयः समुदञ्चितमरुमरीचिकासलिलवीचिकाविहारवैखरीविषयपथिकजनमनोरथवैधुरीधुरीणमध्यदिनाविजृम्भण समुदितयौवनयोषाविशेषगवेषितपुष्पसमयश्रिरतरविरहिणीजननयनमात्रवर्षासमुन्मेषः पितामहपुराणपुरुषमात्रावलम्बितशारदागमः प्रबलतरविरोधसंभावितानर्थपरिजिहीर्षयेव तुषारगिरिकन्दरान्तरालतपश्चर्यापर्युत्सुकहेमन्तसमयस्तरुणीजनकुचकलशसंछन्नवास्तव्यशिशिरभावो भोज्यविशेषविरसपिपासाकुलसकललोकतया जीवनभावमम्भसः समर्थयमानः कायमाननिकायैकायनविलासिजनचिरत्यागकृतशोकातिरेकादिव बाष्पापदेशनिरन्तरनिःश्वासनिःश्वसनगर्भभवनाभोगः पानकरसपानैकतानतां सुरभितरकाश्मीरघनसारपरागविरोचितसरोचनपटीरलेपलोलुपतां प्रभातशयनसस्पृहतां लघुतरसरलोशीरशलाकारचिततालवृन्तनितान्तधारणविगतालस्यतां

१ करम्बितः शब्दितः । २ परिमीलनं सुगन्धः । ३ बालानिलो मन्दवायुरित्यर्थः । ४ एकतानता अनन्यचित्तवृत्तित्वम् । ५ काश्मीरं कुङ्कुमं, घनसारः कर्पूरः ।

मन्दोष्णोपचारवैरस्यतां प्रमदवनविलासलालसतां प्रपासन्निवेशसलिलाशनाशयतां शीततरनीरविहारपरमादरतां विकस्वरपरागराजिराजितसरोजमालालङ्कारमहोत्सुकतां परिपूर्णराकानिशाकरालोकविलोकनकामुकतां विषयसमुत्सुकतां च विषयलम्पटानां संपादयन्सुलभसलिलावगाहतया सुगमसच्छायप्रदेशतया परिधाननिरपेक्षतया सुप्रापप्रपाशिशिरवारितया सुकरतालवृन्ततया च किंचिदकिंचनजनस्यापि भोगसुभगभावुकः समुदश्चदान्तरपरितापमात्रपरिभूतविरहिणीजनसत्वरप्राणहरणाय बहिरपि समुन्मेषोष्मातिभूमिरुष्मागमसमयः समुदजृम्भत । तत्र च ।

आयामायामभावेन कृशाङ्गी कामनीयकम् ॥
सकला सा कलानाथं[1] यामिनीकामिनी ययौ ॥ ८० ॥
तन्माधवबलाक्रान्तं वृन्दावनवनं तदा ॥
शुशुभे न तथा मासाद्विकस्वरपलाशता[2] ॥ ८१ ॥

एवममन्दानन्दप्रदवृन्दावने माधवं स्ववाच्यर्तुवैभवमनुभवन्तमनुरचितविविधकेलिप्रकर्षः क्रीडापदेशेन स्वमभिभवन्तं गोपरूपिणं दैत्यापसदं प्रलम्बाभिधमविलम्बेन धेनुकासुरदशां निनाय । तदनु दन्दह्यमानदावदावानलज्वालाकलापवलयितेषु व्याकुलकाकुलपितेषु गोपालेषु ।

हा कृष्ण हा राम दयापयोधे दीनार्तिहारिन् शरणं भवेति ॥
कृतप्रणादं कुररीविरावस्वरूपमेषामशृणोन्मुरारिः ॥ ८२ ॥
श्रीपतिः श्रितवात्सल्यात्कल्पान्तदहनोपमम् ॥

---

१ कलानाथं चन्द्रम् । २ प्रफुल्लपलाशवृक्षता अथ वा मधुरस्वरपक्षिता ।

तदा योगवलाद्वह्निमुपसंहरति स्म तम् ॥ ८३ ॥

एवमनेकविधविबुधविस्मयनीयलीलाविलासशाली वनमाली सहली हेलासहचरैरनुचरैः सह वृन्दावनमुल्लसितेन्दिराभवनमतनुविहारैरतनोत्। अथानतिचिरेण वर्षर्तुरपि सर्वर्तुशोभिनं माधवमवलोकितुमिव प्रतीक्षितावसरः स्फुटमपरिमितवसुवितरणचणतां दिदर्शयिषुरुदगात् ॥

इतरैः सममेव सन्निधस्था किमु वर्षाल्पपितापितातपेन ॥
यदसौ स्तनितच्छलाद्रुदन्ती सुदती वृष्टिमिषात्तदाविरासीत् ॥८४॥

नामोदितं तदा किंवा कादम्बोन्मेषवैभवैः ॥
चित्रं तदापि नामोदः कादम्बोन्मेषजो नृणाम् ॥ ८५ ॥

यदा गतिरयोगार्तवधूजनविनाशिनी ॥
प्रावृषि प्रसृतो वातः कुतः सोयं सदागतिः ॥८६॥

मलिनोप्यतिचश्चलोपि मेघः कलयन् तत्सुतिरस्कृतिक्रियाम् ॥
विषकरमयाशयोपि दीनैः प्रणुतः कैश्च न जीवमात्रदानात्॥८७॥

गर्जितैस्तार्जितामद्धातडिद्भिर्भीषितामपि ॥
सर्वंसहां स्थिरां नेतुं प्रसादं शरदा ययौ ॥८८॥

प्रतिपन्नघनागमान्तभाभो विमलीभूतजलाशयो विपङ्कः ॥
समपद्यत मध्यमो हि लोको न तदानीं कथमाविरस्तु हंसः ८९॥

पक्षस्तदा नीलकण्ठे केवलं विषयोऽभवत् ॥
वासुदेवे परं रक्ता तथापि सकला मही ॥ ९० ॥

तदानीमेव ।

वृन्दावनपदे रम्ये तदा विहरतो हरेः ॥

---

१ पृथ्वीम् ।

वेणुनादविनोदेन के वा नैवातिहर्षिताः ॥ ९१ ॥

स्थाने हि तत् ।

छिद्रैर्मुहुर्मुखगतैरपि गायकाना-

मागन्तुकैश्च सहजैर्बहुभिर्लघीयान् ॥

वंशस्तदा हरिकरग्रहणानुभावा-

त्प्राप्तश्रुतिं जनयतीति मुदं न चित्रम् ॥ ९२ ॥

एवमतनुप्रसादं दनुजारातिरनुपलमनुभूय व्यतीतायामासादि-तासमसायकसुखावन्या कामिन्यामिव रमण्याद्यमुदि शरदि ॥

संतप्ताः सुदृशस्तदा व्रजगताश्चेतोद्भवव्याधिभि-

र्मन्वाना हरिमन्तरेण विरसं संसारसंसेवनम् ॥

कुर्वाणा गुणवर्णनं प्रतिमुहुर्गेयाः कथाः संतलेः(?)

किंवा साधनमान्तरङ्गमिति तत्प्राप्ता विचाराकुलाः ॥९३॥

ततः ।

नाथस्त्रिजगतां नाथो हरिरस्माकमस्त्विति ॥

हैमन्ते प्रथमे मासि चक्रुः कात्यायनीव्रतम् ॥ ९४ ॥

तदानीमभ्यर्च्य विविधोपचारैरनन्यजातचेतसो भगवतीं सर्वे-प्सितदायिनीं भवानीमेवमस्तौषुः । तथा हि ।

नालीकद्युतिपश्यतोहर मदस्त्वत्पादपङ्केरुहं

वन्देयन्मकरन्दबिन्दुलहरीदैन्यानलध्वंसिनी ॥

यत्केलीकलहेषु विश्वजननित्रासान्वितः शंकर-

श्चूडापीडहिमद्युतिस्रुतसुधाधाराभिरासिञ्चति ॥९५॥

---

१ असमसायको मदनः । २ मदनपीडाभिः । ३ चूडापीडहिमद्युतिः मस्तकधृतचन्द्रः ।

मातः स्तौति चतुर्मुखः प्रणमति प्राचीनबर्हि[1]र्मुहु-
र्व्याचष्टे मुरशा[2]सनस्तव गुणान्मन्दारमाल्योपमान् ॥
इत्थं पार्श्वचरोक्तिभिः कथमपि व्यापारयन्ती दृशः
प्रान्ते काचन मोहिनी विजयते लीलाशुकैकायना ॥९६॥
आनन्दाश्रुझरीपरीतनयनाः संफु[3]ल्ललोमच्छटाः
स्वेदापूरितगद्गदध्वनिभृतः संक्षीणवेद्यान्तरा[4]ः ॥
धन्याः केचन चिन्मयीं पशुपतेरानन्दकन्दायिता-
मम्ब त्वामनुचिन्तयन्ति करुणाकल्लोलिनीमादरात् ॥९७॥
मुरान्तकपुरान्तकप्रभृतयो दये[5]दुरा
न सन्ति किमु देवताः प्रणत[6]लालनालालसाः ॥
तथापि मम मानसं कलितकल्पवल्लीनिभे
दया[7]रसमयाशये महसि शङ्कराह्लादिनि ॥ ९८ ॥
न कर्म रसयामहे न च तपांसि शिक्षामहे
न वैव तमुपास्महे न हृदि किंचिदाशास्महे ॥
महः किमपि मङ्गलं परममङ्गलानामपि
त्रिलोचनतपःफलं हृदि विधातुमीहामहे ॥ ९९ ॥
तुषार[8]गिरिसंभवं मघव[9]नीलनीलालकं
कलाधरं[10]कलाधरं कलितलोलनीलांशुकम् ॥

---

१ प्राचीनबर्हिरिन्द्रः । २ मुरशासनो विष्णुः । ३ संफुल्ललोमच्छटाः प्रफुल्लरोमाञ्चाः । ४ संक्षीणवेद्यान्तराः क्षीणान्यवेदनीयाः । अन्यवेदनीये संक्षीणा इत्यर्थः । ५ दयायुक्ताः । ६ भक्तप्रीतिकराः । ७ दयारसपरिपूरिपूर्णभाण्डारे । अथवा स्त्रीलिङ्गसंबुद्धिः । ८ हिमगिरिप्रभूतम् । ९ मेघनीलिमा इव नीला अलका केशा यस्मिन् । १० चन्द्रवत्तेजःपुञ्जम् ।

दयामयमयामहे शरणमिन्दुबिम्बाननं
मुदारुणमंदारुणं किमपि हारि हारिन्महः ॥१००॥
मघामधुविधाधरे(?) सविधुखण्डचूडे पदे
महीयसि महामहे महसि पद्मरागारुणे ॥
निमज्जतु न मज्जनप्रचुरदैन्यदावानले
मनो मम मनोभवाहितमनो विनोदास्पदे ॥ १ ॥
विभावसुविभाझरी तुहिनरश्मिरश्मिच्छटा-
शिखालयशिखावलीमिलितलोचनाब्जं महः ॥
सदा मृदु मुदावहं किमपि नीपवापीतटी-
निवासगुणवासित भजतु मामकीनं मनः ॥ २ ॥
दयारसकरम्बितैर्नवसुधातरङ्गोज्ज्वलैः
सरोजपरिपन्थिभिः स्नपय मामपाङ्गैः शिवे ॥
अनेन मम धन्यता न च तव श्रमस्तावता
यशोपि तव जृम्भति श्रितकृपालुताहेतुकम् ॥ ३ ॥
दयितो मे यशोदाया दायादोऽयं दयापरः ॥
देवि ते दयया भूयादायासोयं कियानये ॥ ४ ॥

एवं भूयः प्रशंस्य भगवतीमभीप्सितमभ्यर्थ्यमाना यावन्मासं व्रतमन्वातिष्ठन् ।

---

१ अयामहे 'अय गतौ' यामः । २ मुदारुणमानन्दपरिपूर्णम् । ३ समानं यद्विधुखण्डमर्धचन्द्र इत्यर्थः तच्चूडायां मस्तके यस्याः तत्सम्बुद्धिः । ४ सूर्यप्रभोद्गमः । ५ शिखालयोऽग्निः । ६ विद्यते कोपि स्थानविशेषः । ७ सरोजपरिपन्थिभिः कमलशत्रुभिः । ८ सर्वोत्कर्षेण वर्तते ।

इति श्रीमद्भागवतचम्पूकाव्ये कालिदासकृते काव्ये द्वितीयस्तबकः ॥ २ ॥

---

## तृतीयः स्तबकः ।

अथ वारिविहारसादरा विधुरा बल्लववामलोचनाः ॥
अगमन्यमुनामनाविलां कलयन्त्यो हृदि नन्दनन्दनम् ॥१॥
वसनानि निधाय यामुने तटदेशे लहरीं ततः स्त्रियः ॥
च्युतकोशरतीशविस्फुरत्तरवारीहृदि याः समाविशन् ॥२॥
अथ नेत्रपरम्परां हरन् हरिरासामरुहत्तरोः शिरः ॥
प्रमदा न तदप्यवागमन्नतिवेल जलसंगलालसाः ॥ ३ ॥

तदनु चिरतरवारिविहारनितान्तपरिक्लान्ताः कान्तानिर्गमनकामनया कूलोपकण्ठव्यापारितनयनान्तास्तदुपान्तनिहितनिजदुकूलजालमनालक्ष्य समीपनीपपादपशिखरवास्तव्यं हस्तविन्यस्तपरिधानस्तोममस्तोकस्तोकबालकस्तबकिताधःप्रदेशमितस्ततो विस्तारितशास्तस्वास्तिदनयनयुगुलमब्जलोचनमवलोकमाना विस्मयमानमानसाः सहसा रसाश्लिष्टशरीराः सत्य एव सत्यो बभूवुः ।

तत्रेतरेतरविलोकनहासशङ्का-
संकोचविभ्रममनोहरमङ्गनानाम् ॥

---

१ जलक्रीडाविषय आदरसहिताः । २ विकलाः ।३ स्वच्छाम् । ४ विगतकोशं मदनस्य चञ्चलं कृपाणमिवेत्यर्थः । वस्त्राभावत्वात् । ५ वस्त्रसमुदायम् पक्षे यथार्थे । ६ अस्तोका बहवः ये स्तोकाः कमलानि बालकाश्च 'बाणवातोत्पले स्तोकस्त्रीष्वल्पेचातके पुमान्' इतिमेदिनी । ७ उदकव्याप्तशरीराः ।

पाण्डित्यमाङ्गजमनर्गलमाविरासी-
दाकर्षि येन सविलासमधोक्षजोपि ॥ ४ ॥

अथ तास्तारुण्योपलक्षिता रमण्यो यदुतनयमेवं सविनयं व्यजिज्ञपन् । अये करुणापारावार यशोदानन्दन ।

कस्यां दिशि न तेऽनन्तकृतमाच्छादनं गुणैः ॥
ततो गुणनिधे युक्ता नाबलाम्बरहारिता ॥ ५ ॥
व्रतस्य फलमस्माकं दासीभावान्न ते परम् ॥
आसादितमिदं देहि वासो नः कृतगोपनम् ॥ ६ ॥

एवमृजुबुद्ध्यैव मुहुर्मुहुरभ्यर्थ्यमानासु धृतसलिलाकण्ठकायगोपनासु तासु निखिलाङ्गनासु सुकुटिलचाटुमन्दस्मितं स्मेरवारिजलोचनः प्रत्यभाणीत् ॥

कुविन्दस्त्वं व्रतेनासि वासो नश्चैव पालकः ॥
इति वः श्लेषवाग्भङ्गिरबोधि न मया किमु ॥ ७ ॥
प्रत्येकं यूयमायात विनिर्याय जलाशयात् ॥
तदा दास्याति दासोय वासांसि विनये नरः(?) ॥ ८ ॥

एवमर्थान्तरकल्पनयानल्पतरवादकदम्बविडम्बनैकताने भगवति वासुदेवे गत्यन्तराभावादेकान्तशीतवेपिता अपि ता वनिता वामहस्ततलपिहितवराङ्गा नितान्तनमिताखिलाङ्गाः कथमपि सलिलाशयात्तत्पदलाभाशया निश्चक्रमुः ॥

तदा तीरमपि प्राप्य मज्जन्तीनां त्रपार्णवे ॥
परस्परमृते तासामासीन्नैवावलम्बनम् ॥ ९ ॥
ऊरुमूलपिहितं विलोकयन् गोपमुग्धरमणीमणीगणम् ॥
सेतुतः फलितमात्मनो व्रतं प्रत्युतेति भगवानाचिन्तयत् १० ॥

---

१ आङ्गजं मदनसम्बन्धि । २ शिल्पी वस्त्रोत्पादकः ।

गुह्यमस्तु किमु सर्ववेदिना तासु नेक्षितचरं मुरारिणा ॥
मोहनाय मनसस्तथाप्यसौ सुभ्रुवामिदमुवाच सस्मितः ॥११॥
अञ्जलिं शिरसि संरचय्य चेन्मां नमस्कुरुत भावमान्तरम् ॥
स्पष्टमाकलयता तदा मया दीयतेऽभिलषितार्थसञ्चयः ॥१२॥

एवमभिदधानमतिसन्दधानमेनमन्तरेण निरुक्तवचनकरणमपहार्यं निश्चयं मन्वानासु तन्वङ्गीषु तथैवाङ्गीकुर्वाणासु।

आसामासादितामोदो वासांसि वितरन्हरिः ॥
अश्रौषीन्निजसम्बन्धरूपव्रतफलार्पणम् ॥ १३ ॥

अथ वासांस्युपादाय व्रजं व्रजवधूजनः ॥
विवेश केशवादेशादाशापाशासिताशया ॥ १४ ॥

एवं व्रजरमणीषु व्रतकृशासु भृशमनणीयांसं प्रसादं वितीर्य किञ्चिदतिलङ्घिते घनतरतरुनिकरान्तरालरमणीयवर्त्मनि वियन्मध्यमध्यारूढे च तीक्ष्णतरकिरणप्रसरे भगवति भास्करे।

अतिभृशं विवशानशनाशया
सपदि नः श्रितपालक पालय ॥
इति निशम्य वचः सहचारिणां
हरिरुवाच वचः प्रियमीदृशम् ॥ १५ ॥

यज्ञवाटमितः सौम्या नातिदूरे प्रवेशत ॥ १६

---

१ संचय्य विधाय। २ जानता। ३ आसादितः प्राप्तो मोद आनन्दो यस्य। ४ सिताः उत्फुल्लाः। ५ महीयांसम्।

तत्र याचध्वमन्धांसि यदि सौहित्यमिच्छत ॥ १६ ॥

एवमाश्राव्य श्रमहारिव्याहृतमाश्रितदेशात्स्वेशादेशादाशावेशपरवशनिजाशयैर्गवीशैरासाद्य सवनसदनमभ्यर्थ्य च निजेप्सितार्थमविनीतमतिमोहपिधानपिहितनिजहितमणिगुणमुनिजनप्रत्याख्यातप्रार्थितार्थतया प्रत्यागतैरावेदितवृत्तान्तेन भगवता तदीयप्रमदाजनोद्देशेन पुनरपि प्रहितैरेतैः सविनयमभ्यर्णमभ्यर्थितस्तदीयरमणीगणो मुहुर्मुहुर्निजरमणश्रुतनिवारणोपि तूर्णमेव दयार्णवसवर्णसखकर्णाभ्यर्णविस्तीर्णतदर्थितान्नार्पणस्वीकारवचनामृताः स्वत एव भास्वरस्वादुभावभावितं चतुर्विधमपि षड्विधोत्तमरसरसितं राजतादिभाजनविराजितं विविक्तभक्तयुक्तपरमान्नराशिमतिशयभक्तिविवशो निजेशये सामोदमादाय सपदि निजसदनान्निष्क्रम्यातिवेगेन वर्त्मन्यात्मपदन्यासमप्यनालोच्य विच्युतविकल्पमच्युतपादोपान्तभुवमवाप ।

प्रतीपवर्तयो जातास्ते सदध्वरगा अपि ॥

तदवज्ञाध्वरागा अप्येता न त्वच्युतेक्षणात् ॥ १७ ॥

---

१ अन्धांसि ओदनानि । २ तृप्तिम् । ३ व्याहृतं भाषणम् । ४ स्वेशादेशात् कृष्णाज्ञया । ५ आशावेशपरवशनिजाशयैः । आशाया आवेशेन परवशा अस्वतन्त्रा आशया भावा येषाम् । ६ गवीशैः गोपालैः । ७ यज्ञगृहम् । ८ निजहितमणिगुणा आत्मलाभादयो गुणाः । ९ अभ्यर्णं समीपम् । १० प्रतीपवर्तयस्तिर्यग्गामिनः । पक्षे प्रतीपः शन्तनुः तद्वृत्तधारिणः । ११ सदध्वरगा-उत्तमयज्ञज्ञातारः । ये गत्यर्थास्ते ज्ञानार्थाः । १२ तेषां पतीनामवज्ञा अवहेलनं तदध्वा तस्माद्रागो यासाम् । १३ अच्युतेक्षणात् ईश्वरदर्शनात् ।

समर्प्य च तदन्नमनन्यभावेन मुनिभामिन्यस्तमेव भगवन्तमतु-
लानन्दप्रसादलाभाशयैवमश्लाघन्त ।

प्रसादस्ते साध्यो विधिमनतिपातैः क्रतुशतै-
र्यदा स्वेनैवास्मान्कलयसि कृतार्थाः करुणया ॥
ततो भाग्यं किं नः किमिव तपसां वा फलमहो
न मत्वा तत्त्वं तत्कतिचन विमुह्यन्ति कुधियः ॥ १८ ॥

एवमभिदधानमवगततात्त्विकसत्त्वरूपमृषिवरयोषित्कुलमवि-
कलमनुगृह्य तदार्पितं च चतुर्विधमन्नजातमप्यनुगैः सह सा-
मोदमास्वाद्य नितान्तमभिननन्द नन्दनन्दनः ।

अथ जातु पुरन्दरादरादरमाराधनतत्परान्हरिः ॥
कलयन्बलवैरिवैरितामवदन्नन्दपुरःसरान्स तान् ॥१९॥

अये कृतमनेन सम्भृतसम्भारेण सङ्क्रन्दनसपर्यासंरम्भेण ।

अत्युच्चं सकलागमप्रणयिनं विश्रामभूमिं गवां
नित्याशेषफलास्पदं सुमनसां संसेव्यमामोदतः ॥
स्यादेनं समुपास्य नूनमचलं श्रेयोवनीवासिनां
मोहो वः सुरराजपूजनधिया कस्मादकस्मादयम् ॥ २०॥

एवं तदानीं कृतपक्षपातः पुपोष तोषं हरिणा गिरीन्द्रः ॥
चिरान्मघोनां कृतपक्षपातश्चकार वैरस्यममुत्र चित्रम् ॥२१॥

ततः ।

---

१ विधिमनतिपातैः यथाविधि आचरितैः । २ इन्द्रशत्रुत्वम् । ३ सङ्क्र-
न्दन इन्द्रः । ४ सहेतिशेषः । 'सहयुक्तेऽप्रधाने' इति तृतीया ।

हितां भगवतीं वाणीं प्रमाणं च विचिन्त्यते ॥
विधिवत्पूजयाञ्चक्रुर्विमोहा जगतीधरम्[1] ॥ २२ ॥
गोगणं हुतभुजप्रदक्षिणज्वालजालमवनीसुरानपि ॥
तर्पयन्व्रजनिवासिनां व्रजो भूभृते बलिमथ न्यवेदयत् ॥२३॥
अथ चेतनयन्ननुप्रवेशादचलेन्द्रं बलिमग्रहीन्मुरारिः ॥
चरितं परितो हि तद्गभीरं न तदा के पुनरद्भुतं वितेनुः॥२४॥
बलरिपुर्मघवानहितो हरेरिति न हेतुरहिद्रुहिनादरे ॥
बलिमुचां वचनच्छलतः स्वयं परिजिघृक्षुरिदं व्यथितध्रुवम्॥२५॥

अथ निजविमतमुरारिचरितपरिकुपितहरिहयसमीरितसंवर्तसमयसमुज्जृम्भणोचितधाराधराडम्बरनिरन्तरसमुद्गीर्यमाणसलिलासारचुलकितेऽशेषनिवेशप्रवेशतया समुदीर्णकर्णपरुषविषमधीरझङ्कारेण सुरभिनिकरेण सममतिकदर्थितेषु गवीशेषु शरणमुपयातेषु ।

अपयशः खलु गोत्रभिदीत्यलं भुवि बभूव हरेरिति चिन्तया ॥
अपनयन्निव तद्यतनं विना व्यथितगोत्रसमुद्धरणं हरिः ॥ २६ ॥
गोगणैः सममार्तैर्यशोदातनयाज्ञया ॥
जीमूतजलमाभीराजवादपजगाहिरे ॥ २७ ॥
कलुषेपि जलैर्लोके निर्मर्यादप्रवृत्तिभिः ॥

---

१ जगतीधरं पर्वतम् । २ चेतनायुक्तं कुर्वन् । ३ हरिहयः इन्द्रः 'जम्भभेदी हरिहय' इत्यमरः । ४ संवर्तः प्रलयः । ५धाराधरा मेघाः । ६ अतिवञ्चितेषु ।

न तदा हरिमाहात्म्यात्पङ्कस्पर्शः पशोरपि ॥ २८ ॥
परिभूतिरभूज्जलैर्न तेषामतिसंधैरपि माधवाश्रितानाम् ॥
गतिरोधि तु सत्पथच्युतैस्तैर्धरणौ पङ्कमुपार्जितं प्रभूतम्॥ २९॥
स्वकं प्रकाशं वृषभावमिन्द्रः सर्वेश्वरस्यावमृतैर्वितेने ॥
गवां निरुन्धे स्म ससन्ततेस्तु स्वैरप्रवृत्तिं विपरीतमेतत् ।३०॥
हंसस्य तस्योदयतोऽखिलेषु लोकेषु शोभातिशयाश्रितेषु ॥
आन्ध्यं प्रपेदे प्रतिकूलचारी तमोनुगः कौशिक एव नान्यः॥ ३१॥

तदनु यदुनन्दनापदाननिशमनसमयविगलितदुरवष्टम्भसम्भारेण जम्भारिणा निवारिते वारिवाहनिवहे विहाय विहायसः स्थलमपसरति निरपायमावासवसुमतीसविधमतिशयानेषु सपरिच्छदेषु च गोपालेषु ।

अनुनेतुं यथास्थानसंस्थापितगिरिं हरिम् ॥
पुरन्दरः समायासीदासीच्चावनताननः ॥ ३२ ॥

आनम्य च मुहुरनन्तरमेवमस्तौषीत् ।

परेभ्यस्त्वं मुक्तिं कथमिह मुनीनामविरत-
स्मृतिश्रेणीरश्मिप्रकरपरिणद्धो वितरसि ॥
निमग्नस्तद्भक्तिप्रचुरजलधौ तारयसि ता-
न्कथं वा तत्त्वं ते क इव विवरीतुं प्रभवति ॥ ३३ ॥

---

१ माधवाश्रितानां श्री कृष्णाश्रितानां पक्षे वसन्ताश्रितानाम् । २ बलीवर्दत्वं श्रेष्ठत्वंच । '–श्रेष्ठे सुकृते वृषभे वृष' इत्यमरः । ३ हंसः श्रीविष्णुः पक्षे पक्षी । ४ कौशिक इन्द्रः पक्षे घूकपक्षी 'कौशिको नकुले व्यालग्राहे गुग्गुलुशक्रयोः । विश्वामित्रे च कोशज्ञोलूकयोरपि कौशिक' इति विश्वः । ५ अपदानं प्रशस्तं कर्म । ६ दुरवष्टम्भसम्भारः गर्वभारः । ७ जम्भारिणा इन्द्रेण । ८ निरपायं निर्विघ्नम् । ९ स्तोतुम् । १० विवरणं कर्तुं ज्ञातुमित्यर्थः ।

अमत्वा त्वामाशापरवशहृदः केपि विदधुः
स्फुरन्नानारूपास्त्वयि मिषति संसारनटनम् ॥
चिरादप्यप्राप्तं किमपि फलमौदार्यमथ ते
विदित्वा याचन्ते कृतमिति वचः केवलमहो ॥ ३४ ॥
सती चेल्लोकानां भवति न हि बाधाभिरसती
न वाच्यं तं सत्यामिव भवति यत्प्रत्यय इति ॥
अशक्ता निर्वक्तुं प्रकृतिमत एतां तव बुधा
भजन्त्या दासी(?)दहह परमानन्दलहरीम् ॥३५ ॥
मनःशोकक्लिष्टं भजतु परमां निर्वृतिमिति
क्षिपन्ते तस्मिंस्ते चरणममृतस्यन्दि मुनयः ॥
क एवं जानीते हृदयमिदमापत्सहचरं
विनश्यन्स्यादेतद्विरहकृतकैवल्यमिति च ॥ ३६ ॥
वरप्रेमाधारस्त्वमसि सकलानां प्रकृतित-
स्तव प्रेम्णः पात्रं भवति चरसेवाभिरपि कः ॥
सदम्भोन्यप्रेमा निरवधिकृपानीरधिरासि
त्वमित्येवं जागर्त्यहह विभुवि कीर्तिस्तदपि ते ॥ ३७ ॥
स्पृशन्तो भक्तानामनिशमपराधानकलना
भवन्तं निर्वाणाः कतिकति न कारूण्यजलधिम् ॥
कटाक्षैस्तद्वन्मामपि सुरगवीसन्ततपयः-
परीवादप्रायैः स्नपय चिरमागःकलुषितम् ॥ ३८ ॥

---

१ प्राताः ।

सुरधेनुपयःपूरैरभिषिश्च्य ततो हरिम् ॥
दिवं दिवस्पतिः प्रायात्परिपूर्णमनोरथः ॥ ३९ ॥

अथ कदाचिद्धरिवासरव्रजमुपजातानन्दं नन्दमवगाहनानर्हमने-हसमविचार्य परिविभावरि शमनभगिनीपानीयमवगाहमानमति-मात्रकुपितः प्रचेतोदूतः स्वाधीशाविवेशमवेशयत् । स्थाने हि तत् ।

....मविचिन्त्य तत्र नन्दे गतवति सूर्यसुतामचिन्त्यनिद्रे ॥
निजगृहगतमक्रमं विदित्वा कथमिव सोढुमपांपतिःसमर्थः ४०

अथो विदितवृत्तान्तस्त्वरितं मुरशासनः ॥
अगमन्मनसा रोषात् गुरुणा वरुणालयम् ॥ ४१ ॥

परिपूज्य जलाधीशो ह्यप्रमत्तस्तदा हरिम् ॥
आ नन्दमभिया तूर्णमानन्दं संत्यजन्नपि ॥ ४२ ॥

पुण्यवान्वरुणलोकयात्रया नन्दमाप्य पुरुषोत्तमः कृती ॥
तत्कृतैरवसितः पुनः क्षितिं प्राप मायिकमनुष्यवेषभृत् ॥ ४३ ॥

अथ भगवानरविन्दलोचनः कस्यामपि तामस्यामभ्युपग-तार्थसमर्थनाय काननपरिसरं रिरंसुरसिश्रयत् । समनन्तरमाशाव-शाधीशकुशलानुयोगायेव दिगन्तलङ्घनजङ्घालाभिरन्धकारधारा-भिरापादिताद्वैते जगति । किं नु खलु पूर्वपर्वतशिखरनिकर-कुरुविन्ददलद्युतिकदम्बमुताहो सकलविलासिनीजनमोहनसाध-

---

१ सूर्यसुतां यमुनाम् । २ आनन्दमिति च्छेदः । ३ 'पर्यन्तभूः परिसरः' इति अमरः । ४ कुरुविन्दं रत्नविशेषः मुस्ता वा ।

नीभूतमनोज्ञमणिबिम्बमथ वा पुरन्दरहरिदङ्गनानयनाञ्जनकरण्डक-मिदं किं वा बम्भेरभरितरजनीभामिनीविलासकोकनदमुताहो-स्विच्चकोरनिकरबुभुक्षापरिशोषकमाषवटकमथ वाऽविरतप्रहारशि-थिलीकृतान्तरपुरन्दरमन्दिरपरिसरघटिकायन्त्रफलकमित्येवमने-कविधमालोकसंशयशलाकाशकलितशरीरे पुरुहूतहरिदारम्भ-परिरम्भभाजने विलसति भगवति पीयूषरोचिषि ।

मुदा वन्दारुमन्दारसुषमैः सुषिरारवैः ॥
आचकर्ष मनः शौरिराभीरतरलभ्रुवाम् ॥ ४४ ॥

श्रुत्वा तां मुहुरस्तदा भगवतो गीतिं विसृज्यालया
मानं मित्रसगर्भ्यतातजननीवित्तान्यपत्यान्यपि ॥
अन्वेष्टुं विनिवारिता अपि मुहुः शौरिं वनं प्राविश-
न्नाभूदात्मसुखैकलोलमनसां चित्तं विषादाय तत् ॥ ४५॥

सारसाक्षमधुराधरामृतास्वादनादरकृततरारुचिः ॥
मन्दिरादपससार सारदृक्क्षीरदोहनमपास्य का चन ॥४६॥

किं धनैर्मम बहिश्चरासुभिः प्राणमान्तरमुपेक्ष्य माधवम् ॥
इत्यपास्य वसु सद्म संविदा कापि केशवमुपासरत्तराम् ॥ ४७ ॥

सौख्यमस्तु हरियोगजं कुतः स्तोकसौख्यमभिलष्यते यदि ॥
इत्यपत्यमवमत्य सत्यवित्प्रास्थिता सपदि कापि कामिनी॥४८॥

---

१ बम्भरः भ्रमरः । २ पुरुहूतहरित् पूर्वदिशा । ३ चन्द्रे । ४ सुषिरं 'मुरली' ति प्रसिद्धवाद्यम् । ५ सगर्भ्या बान्धवाः । ६ विषादाय विषादं कर्तुम् । ७ सारदृक् सारसपक्षिदृक् । ८ संविदा ज्ञानेन ।

इत्थमवधीरितगुरुगिरमगणिताभरणविन्यासविपर्यासमासादितकुतूहलमहंप्रथमिकया[1] समासेदिवांसमाभीरतरुणीगणमभिनन्द्य नन्दनन्दनः सानन्दमत्यादरेणेदमभाणीत् ।

अये बालाः कस्मादयमधिनिशीथं[2] वनभुवि
प्रमाणप्रारम्भः स्फुटझणझणन्नूपुरगणः ॥
प्रियं वः कार्यं वा किमुत वदतावेदयत वा
क्षमं पत्युर्दास्यात्क्षणमपि वधूनां न विरतिः ॥ ५० ॥

एवमभिहितवति भगवति ।

परातिसंधानधुरंधरं तदा तदाशयं व्रीडभरानतानताः ॥
विचारयन्ति स्म परम्परां परम्परामृशन्नोत्तरपूरणे गिरः ।५१॥

अथ तास्तदीयां मायामनुमाय स्वकाशयं[3] प्रकाशयन्त्यो मत्तकाशिन्यस्तदनुकूलं सकौटिल्यमेवमवादिषुः ।

रामानभीष्टकृतमाश्रयतोपि राग-
मभ्यर्णमशि तव मुग्धदृशां श्रितानाम् ॥
निर्याणमुद्भटभवप्रतिरोधिकर्म-
भाजां कथं नु न भवेदरतिस्पृशां नः ॥ ५२ ॥

अखिलेशधिया हि भीरवः शरणं त्वां समनोभवादयः ॥
अभजाम वयं परिग्रहे विरसो या कथं रिपौरुषम्(?)॥५३ ॥

एवमभिदधानमाभीरतरुणीगणमनिवार्यधैर्यमवधार्य जगदार्य-

---

१ अहं प्रथमं अहं प्रथमामिति क्रियया अतिवेगेनेत्यर्थः । २ अधिनिशीथं मध्यरात्रे । ३ स्वकीयमाशयम् ।

वर्यातनुकार्यपर्युत्सुकहृदयः सदयोदधिरधिकमुदा मुररिपुररीरमत् । तथा हि ।

रमणी सरोजरमणीयलोचना
मधुराधराश्रयधुराधरापि का ॥
रुचिराचिरांशुरुचिराशयाशयं
तरलीचकार मुरलीविनोदिनः ॥ ९४ ॥

तरुणीविलोलतरुणीहकानने
मलयानिलेन कलया विधोः समा ॥
अपरा समागमपरा मनोरमा
रमयांबभूव रमया समं हरिः ॥ ९५ ॥

दरस्मेरैर्लज्जा सुभगसुभगैः प्रेमलहरी-
लसत्कल्लोलभैरसमशरनाराचविभवैः ॥
तदा काचिन्मन्दस्मितमधुपदारम्भमधुरैः
कृशाङ्गी सानङ्गैर्मुररिपुमपाङ्गैः समकिरत् ॥ ९६ ॥

ततः ।

हरिः स्मरपरीतापमधुरा मधुराधराः ॥
न्यषिञ्चच्चञ्चलापाङ्गैरेवं नर्मवचोमृतैः ॥ ९७ ॥

उत्तेजनाघर्षणजातरत्नहेम्नोरिवामानवसौकुमार्यैः ॥
प्रियेऽभिनिर्माय तनुं विधिस्ते ततोनुलावण्यरसैरसिञ्चत् ॥ ९८ ॥

---

१ अतनुकार्यं मदनकृत्यम् । २ रुचिरांशुश्चन्द्रः सूर्यो वा तद्वत्स्वच्छ आशयो यस्य ऋजुमनस इत्यर्थः आशयं हेतुम् । ३ ईहकानने क्रीडावने ।

त्वदूरुशोभाभिभवेन रम्भास्तम्भो निजं दम्भमपि त्यजन्तः ॥
मोचाभिधानं दधुरर्थयुक्तं कथं जडस्योरुसमानता स्यात् ॥५९॥
आविर्भवेद्यत्र लतासु पुष्पं तत्रैव दृष्टः फलसम्भवोपि ॥
विभाति चित्रं तरुणीलते ते पुष्पं क्वचित्कापि शलाटुयुग्मम्॥६०॥
बध्नासि चेतो हरतः परस्य कुचाविती मौ किमु कञ्चुकेन ॥
तथापि नैव त्यजतः कठोरं शीलं निजं निग्रहतस्त्यजेत्कः ॥६१॥
पुरामुना कञ्चुककेन मुग्धे किं नाम भद्रं विहित न जाने ॥
भजत्यसौ यत्तपसाप्यलभ्यमनारतं त्वत्कुचकुम्भसङ्गम् ॥ ६२ ॥
विधुर्विधित्सुर्विधुना तवास्य सारङ्गसारांशमपीह तेन ॥
मुखं मृगस्याक्षियुगं मदस्तु काले तवास्ते तत एव बाले ॥६३॥
तवाननादर्शतलेऽधरोसौ तुण्डीफलस्य प्रतिबिम्ब एव ॥
मुग्धे फलेस्मिन्कथमन्यथा तु घटेत बिम्बव्यवहार एषः ॥६४ ॥
समग्रमङ्गं तव चञ्चलाक्षि हरिद्रचूर्णेन विधाय वेधाः ॥
मदान्यधान्न्यूनमिहाधरोष्ठे यदत्र रागातिशयोपलम्भः ॥ ६५॥
सुदूरदर्शिन्यपि लोचने ते भवत्यपार्थं श्रुतिलङ्घने चेत् ॥
तमःसमूहप्रणयित्वमस्तु न वालभारे मलिने कथं नु ॥ ६६ ॥

सिक्ता चाटुरसैरेव कुरङ्गनयनास्ततः ॥
चार्वङ्गीप्रक्रियामङ्गीकारयामास माधवः ॥ ६७ ॥

---

१ कदली स्तम्भाः । २ विधातुमिच्छुः । ३ 'सनि मीमाघु-' इत्यादिना इस् 'अत्र लोपोऽभ्यासस्ये 'त्यभ्यासलोपः ।

बाले विद्रुमपाटले तव पदे संवाहयाम्याथ किं
किंवा चन्दनचर्चितं विरचयाम्यङ्गैर्यथा निर्वृतिः ॥
धम्मिल्लं किमु भूषयामि कुसुमैरित्यादराच्छ्रीयते
राभीरीनवसङ्गमं गलवचःश्रेणी शिवायास्तु नः ॥ ६८ ॥

त्यक्त्वा बहिः केलिविरोधिभावां लज्जां लताकुञ्जमवापदेका ॥
पुनस्तदायान्तभवादिवाशु कान्ताकवाटं घटयाम्बभूव ॥ ६९ ॥
मन्दाक्षभावादवगम्य कामं समीकसाहाय्यविधावशक्तिम् ॥
व्रीडन्यवर्त्तिष्यतदास्यानितान्तमश्रान्तसमाश्रयोपि (?) ॥ ७० ॥
यदेषशय्यानयनच्छलेन करावहं लोलदृशां व्यतानीत् ॥
बभूव कामानलसाक्षिकः स पाणिग्रहस्तत्कथमेष जारः ॥ ७१ ॥
........................................................................ ॥
न्यवारयत्पाणियुगेन कापि स्वनीविमोक्षं सुरतोत्सुकापि ॥ ७२ ॥
समागमादस्य रमाधिनेतुः कियन्तमन्तःकरणं सुदत्याः ॥
नाविन्दतानन्दमिति प्रतीमस्तनूरुहार्धेपि बहिःप्रहर्षे ॥ ७३ ॥
रदच्छदं द्राक्सविधं गताया लोलाङ्गनाया यदसावचुम्बत् ॥
बभूव तद्गाविनिशम्बरारेर्मृधैव धेयं किल वीरियानम् ॥ ७४ ॥
मुग्धे कथं कञ्चुकिकां दधासि वक्षोजलक्ष्मीं तव या विधत्ते ॥
इत्थं प्रियां कामपि मोहयित्वा तद्द्रोणिकामाचकलन्मुरारिः ॥ ७५ ॥
........................................जगाम वक्षोजयुगं पुरैव ॥
मुग्धेधुना कञ्चुकधारणं किं मुग्धेति तद्ग्रन्थिमसौ व्यमुञ्चत् ॥ ७६ ॥

---

१ धम्मिलं केशपाशः ।

अतिप्रसन्नं हृदयं तवेमौ कुचाङ्कुरावागृणतः कठोरौ ॥
इतीव रोषात्सिचयं विनीय न्यपीडयत्तावदयं मुरारिः ॥ ७७ ॥
उरोजकुम्भौ युगपत्कराभ्यां धरन्हरिस्तद्धृदयेशयाय ॥
मनोभवाय प्रभवेथ राजफलोपहारं वितरन्निवासौ ॥ ७८ ॥
स्पृशामि ते सुन्दरि वारमेकं पयोधरौ सा............ ॥
...................प्रसह्य जग्राह कुचौ मृगाक्ष्याः॥ ७९ ॥
मुरारिणा कापि हृतोत्तरीया रयादुरोजौ पिदधे कराभ्याम् ॥
लब्धावकाशः स तदा चुचुम्ब विपाणिरोधं तरसातिरोषात् ॥८०॥
पयोधराग्राकलितानि तन्व्या विडम्बयति स्म नखव्रणानि ॥
उदग्रपूर्वाचलशृङ्गशोणमणिप्रभालिप्तशशाङ्कखण्डम् ॥ ८१ ॥
बभार शौरिः कुचपीडनादौ प्रियासु यन्निर्दयतां तदा सा ॥
अजिज्वलन्नैव मनो मनोभूरचीकरत्तेन विमोहयन्यत् ॥ ८२ ॥
हृदिस्थितावप्यनिशाप्रियाया............................... ॥
कुचौ निनेपुर्हृदयं मुहुर्वा शिश्लेष वक्षोजनिपीडमेषः ॥ ८३ ॥
नीवीस्पृशं कापि ततो मुरारिं बबन्ध मौलौ कुसुमस्रजाशु ॥
समाजगामाग्रसरोपि काम[म]नाटयद्दंघभूतावशक्तिम्(?)॥ ८४ ॥
यन्नीविमोक्षं विनिवारयन्त्या मृगीदृशः कङ्कणिना करेण ॥

---

१ आगृणतः अपमानं कुरुतः । २ सिचयं वस्त्रम् । ३ हृदये शेते इतिहृदयी शयः तस्मै 'शयवासवासिष्वकालादि'त्यलुक् हृदयास्थितायेत्यर्थः । ४ ददन् । ५ मुखं चुचुम्ब चुबिवक्रसंयोगे इतिधात्वर्थेन कर्मोक्तत्वात् । ३ विगतः पाणिरोधो हस्तनिरोधो यस्मिन्कर्मणि यथातथा । ७ उदग्र उच्चो यः पूर्वाचल उदयपर्वतः शेषं सुगमम् ।

स्मरार्चनारम्भणसूचकः स बभूव घण्टानिनदप्रपञ्चः ॥ ८५ ॥

तदा दुकूलापहृतिप्रसंगे बभूव यूनोः कलहस्तयोर्यः ॥

मध्यस्थया मेखलया तरुण्या तद्वारणायापि च पर्यवारि ॥८६॥

मुग्धे न वेत्सि प्रियमप्रियं वा स्वप्सेति निर्भर्त्सनतत्परैर्वा ॥

क्षौमापहारं विनिहारयन्त्यास्तारं तरुण्यावलयैररसिञ्जि ॥८७॥

एकेन नीवीमपरेण शौरिः करेण गृह्णन्नधरं प्रियायाः ॥

स्तनौ च जग्राह करद्वयेन चतुर्भुजत्वं विवरीतुमिच्छन् ॥८८॥

नीवीं विनीय द्रुतमूरुमूले लोलेक्षणा गोपवधूकिशोरे ॥

निजाक्षियुग्मं न्यमिमीलदेका परा मुरारेर्व्यवितक्षियुग्मम् ॥८९॥

अवारि मन्दाक्षविमोहमाययाप्यलङ्घ्यसान्द्रोपि मनोभवाधिः ॥

अलम्बि कोपि प्रियदो वधूनां नीवीविमोक्षो न कथं नु मोक्षः९०॥

अभावि यत्स्वापितयापि रत्यै ह्रिया विमुख्या परिवृत्य तन्व्या ॥

विलोकयन्मुग्धनितम्बविम्बं तदप्यभीष्टं सममन्यतासौ ॥ ९१ ॥

पलाय यत्नैरुदितैर्विशुष्कैर्नित्सर्भनाभिः स्मितगर्भिताभिः ॥

मुग्धैरपाङ्गैर्मृदुपाणिरोधैरानन्दयत्कापि तदा मुरारिम् ॥९२॥

रतानुकूलः परमङ्गनानां बभूव बन्धो विविधस्तदानीम् ॥

न जारनाथाश्रयणेपि बन्धः परो मुरारिप्रणयानुभावात् ॥९३॥

रतान्तरे निश्चलतां प्रयाता सुखातिरेकादरमीलिताक्षी ॥

---

१ घण्टानादविस्तर इव । २ वस्त्रहरणवेलायाम् । ३ शब्दमकारि । ४ मन्दाक्षेण विशेषो मोहो यस्यामितादृशी माया तया अलङ्घ्यः लङ्घितुमशक्यश्चासौ सान्द्रो निबिडः । ५ मदनबाधा पक्षे मनस्युत्पन्ना पीडा संसारव्याधिरित्यर्थः।

विलापिनी रोचन[1]पञ्चबाणं विचितयन्ती मनसैव रेजे ॥ ९४ ॥
यदाविनाभूततया बभासे भुजद्वयी केलिरसे निमग्ना ॥
चिराय तत्संघटनासु खिन्नस्तदैव विश्रान्तिमगादनन्तः ॥ ९५ ॥

एवमनङ्गदीक्षादीक्षितानामाभीरचञ्चललोचनानामतिशयितपतिवाञ्छम्यसम्भवदवष्टम्भ[2]सम्भारविघटनाय यशोदादारकः समनन्तरमन्तर्धात् ।

क्षणादन्तर्भूतैरनुभवपदं प्राप्य सदृशो
हरेर्लीलाजालैरपहसित[3]विद्युद्विलसितैः ॥
किमप्यान्धं स्वैरव्यवहृति[4]विरोधि प्रविविशे
न तादृक् प्रागेतद्विरहसमयेपि स्थितमभूत् ॥ ९६ ॥
मुरारिविरहाद्वामा विमोह[5]गहनं गताः ॥
मुहुर्गहनमासेदुस्तदन्वेषणकारणात् ॥ ९७ ॥

अयि मन्मथ मन्मथस्त्वया रमिते माधव माधवे[6] स्फुटम् ॥
स्फुरति त्वयि माधवी[7]पदे हरिसम्बन्ध[8]विमोहकं यतः ॥ ९८॥
सत्वरं कथय केन पथासौ चूत[9]पादप हरिश्चलितः स्यात् ॥
पल्लवस्य[10] गतिरस्य विबुध्य पल्लव[11]प्रणयिना भवता स्यात् ॥९९॥

---

१ रोचनः कान्तिमान् पञ्चबाणो मदनस्तम् । २ अवष्टम्भो गर्वः तस्य भारः समुदायस्तन्नाशाय । ३अपहसितं निन्दितं विद्युद्विलसितं तडिच्चलता यैस्तैः ४ स्वतन्त्रव्यवहारविरोधकारि । ५ गहनमरण्यम् । ६ वसन्ते । ७ माधवी गोमहिष्यादिसम्पत्तिसमुदायस्तत्पेद स्थाने गोकुले इत्यर्थः । ८ परमेश्वरसम्बन्धेन व्यामोहजनकम् । ९ आम्रवृक्ष । १० पादस्य । ११ पादप्रीतियुक्तेन किसलययुक्तेन च ।

अधोक्षजा[1]ध्यक्षमशोक किं ते बभूव निर्वाणनिदा[2]नभूतम् ॥
अशोक[3]भावः कथमन्यथा तु तवैव दृष्टः सकलागमेषु ॥१००॥
धत्तूर[4]शालि प्रणयं विधाय सकृत्ततस्त्वामिति संदधे नु ॥
वियोगिकान्तानिजनिर्विशेषमुन्मत्तभावं विवृणोषि येन ॥ १॥

एवमुन्मत्ततामेत्य मृग[5]यन्त्यो मृगीदृशः ॥
यशोदादा[6]रकाद्वैतमापुस्तद्भावनाबलात् ॥ २ ॥

वधूरधात्काचिदलीकपूतनास्तनौ विनोदेन जनार्दनायिताम् ॥
प्रयातु तत्र प्रलयं पुरोदिता तथा द्वितीयापि पुनस्तदद्भुतम् ॥३॥
कयापि तन्व्या मधुसूदनायितं कयाचिदालम्बि भुजङ्गभावना ॥
विजेतुमीशापि भुजङ्गमादिना प्रतारिता प्रत्युत तेन लीलया॥४॥
जनार्दनाद्वैतमवाप्य काप्यहो दवानलं हीनमनाटयत्तमाम् ॥
ततः परीतावधुरामवापसौ रुषा विषादो विरहानलादिति ॥५ ॥

ततः ।

अदृश्योयं शौरिः पदकमलमुद्राश्रवणतः
सुखं साक्षात्कार्यो भवति ननु यागैः किमपरैः ॥
विचिन्त्यैवं तत्र व्यवसितमतीनां न सुदृशां
प्रकाशोभूदस्य क्वचन तमसः क्वापि रजसः ॥ ६ ॥

एवमनेकाटवीपर्यटनास्तवाटशविकटाटोपपरिपाटलचरणयुगुलबल्लवचलाचललोचनाः । क्वचन नितान्तनिमग्नामनिद्रभद्रां

---

१ अधोक्षजः परमेश्वरोऽध्यक्षः स्वामी यस्य तत् । २ निर्वाणपदं मुक्तिः । ३ अशोकभावः शोकाभावः अशोकवृक्षत्वं च। ४ कनकवृक्ष। ५ गवेषयन्त्यः । ६ कृष्णैक्यम् ।

चन्द्रकुलजमणिचरणमुद्रामालोक्य कामपि कामिनीमनुरागभरेण भुजाशिरसा परिवहति यशोदाकिशोर इति निर्धार्य धार्यमाणधैर्यविपर्यया: पर्यायतो बभूवुः ।

पङ्के घने रजसि वा प्रचुरे कथं त-
दभ्युन्नतं त्रिजगतोपि गुरोः पदं स्यात् ॥
कामाभिभूतमनसामिदमाविरस्तु
तत्त्वावधारणकथा कथमन्तरेण ॥ ७ ॥

ततश्च ।

समुत्प्लुत्य प्रेमामृतजलधिपूरे प्रियतमं
प्रियां क्षेप्तुं वाञ्छन्निव स कतमामेवमवहत् ॥
भवत्वेतत्तत्त्वं किमपि तपसां सञ्चयमयं
निजैर्लीलाजालैरितरदुरवापं किमतनु ॥ ८ ॥

अलमलमपयामि मुञ्च भीतिं
गुरुजनतर्कितवेतिभाषिणं माम् ॥
चिरमुचितवचोभिराधितो यः
मधुमधुकैः स कथं कृपां जहातु ॥ ९ ॥

कदा वा लावण्यामृतरसपरीवाहनिलयं
पुनः प्रादुर्भूतं मधुरमधुरं वीक्ष्य दयितम् ॥
हरे शौरे कान्ताप्रियतमसरोजाक्षशरणं
भवेति क्रोशन्ती निमिषमिव नेष्यामि दिवसान् ॥१०॥

---

१ चन्द्रकुलजमणिः श्रीकृष्णः । २ धार्यमाणं धृतं धैर्यविकलत्वं याभिस्ताः ।

त्यक्त्वा धर्मकथां निजामुपनतं केलीसुखं च प्रियां
मोहादुच्चसुखानुभूतिचपला विश्रम्भमाप्तास्त्वयि ॥
नाथ त्वं च न वीक्षसे यदि कृपातुङ्गैरपाङ्गैस्तदा
भ्रष्टानामुभयत्र हन्त शरणं किं स्याद्गतिः का हि नः॥११॥

प्राणेश मुग्धमधुरं वदनं सकृत्ते
संदर्शयाशु न ततोधिकमर्थये त्वाम् ॥
अभ्युद्यतो निरपराधवधूवधार्थ-
मन्तर्दधातु कितव त्रपया शशाङ्कः ॥ १२ ॥

कन्दर्पतापनविधावबलाजनस्य
निन्द्या पराक्रमविधा कतमेयमार्यैः ॥
त्वां रूपशौर्यविभवादविभावयन्त-
मुद्वीक्षसे यदि हरे पुरुषस्तदास्याः ॥ १३ ॥

कल्याणजालनिलयं करुणारसार्द्र-
मानन्दकन्दमनवद्यमुखारविन्दम् ॥
त्रैलोक्यमोहनसनूनमनस्तपुण्या
हा हन्त कान्तमिह तन्न विलोकयामः ॥ १४ ॥

रोषो भवेद्यदि निरस्य मदङ्गसंगि
चैलं कुचौ रचय निर्दयमर्दनीयौ ॥
दन्तैर्नखैरपि लुनीहि कपोतनादैः
संत्रास्य पातय रतादवशां सुखाब्धौ ॥ १५ ॥

अकृत्यं मत्वेदं प्रतिपदमनर्थो गुरूजना-
द्व्रतं पातिव्रत्यं सुखमपि निगीतं न सुलभम् ॥

इयं च प्रत्याशा विभवति न हाहा तदनुगा
विधेर्वैधेयागम्यवसितमये किं नु भवता ॥ १६ ॥

एवमभिधाय समारब्धरोदनाभिरतिशयितविरहकृशानु[1]कृशानु-भावाभिराभीरभामिनीभिरतिपाण्डुराभिस्तरूणीभिरपि पुराणपुरु-षाभिलाषिणीभिरार्द्रीकृतहृदयोदयो दय[2]यशोनिधिर्यशोदानन्दन-स्तदनुतत्पुरतः प्रादूरभूत्।ताश्च तदनन्तरमकाण्डो[3]पलब्धममृतकुण्ड-मिव मकरकुण्डलं पुण्डरीकाक्षमभिलक्ष्य तदीक्षणसुखमखिलविलक्ष-णमात्मचक्षुर्भिरतनुरसमनुभूय भूयोपि तत्र काचन चरणसंवाहनेन तदपरा करावलम्बनेन तदन्या व्यजनवीजनेन काचिदालोकयेति-शब्दसमुच्चारणेन कापि ताम्बूलवीटिकाप्रदानेन काचन स्वेदा-म्बुजालकपरिमार्जनेन कापि पांसुसन्दोह[4]निरसनेन काचन ता-म्बूलकरङ्कपरिवहनेन काचित्पल्लवकल्पनेन च यथाभिलषितमा-साद्य परिपूर्णमनोरथा बभूवुः ।

वनमालिनि मायया परोक्षे
सुदृशां शोककृशानुरूढतो यः ॥
स कथं शममेति वाग[5]भूमि
हरिसाक्षात्कृतिवृष्टिमन्तरेण ॥ १७ ॥
अनुगृह्य ततो रासं विहारै रमणीर्हरिः ॥
विरहानलसञ्जातपरीतापमपाहरत् ॥ १८ ॥

---

१ अतिशयितो यो विरहकृशानुर्विरहाग्निस्तेन कृशाः अनुभावाः क-टाक्षादयो भावाः प्रभावा वा यासां ताभिः । २ दयाः दातृत्वादयः यशो जयः तेषां निधिः । ३ अकाण्डोलपब्धं अकस्मात्प्राप्तम् । ४ रजःसमुदायना-शेन । ५ वाचामस्थानम् 'यतो वाचो निवर्त्तन्ते' इतिश्रुतिप्रतिपाद्यम् ।

तदासदनमासेदुर्मुदिताः प्रमदा अपि ॥
अपि तस्यानुभावेन पतिवाञ्छम्यमभ्ययुः ॥ १९ ॥

एवमनेकविधसुखाकरविधिशङ्करादिसुरवरस्पृहणीयमतिरमणीयं रामणीयकभावानुभावधोरणीभिरुपवीणितमप्सरो(भिः)स्वापकारणीभूतपूर्वमखर्वानन्दं वृन्दावनरसोदितमतनुहेतुकं कौतुकतो विरचय्य रासं तरसानुवैभववैविभागिनीः सरभसमाभीरभामिनीर्विधाय रममाणो रमारमणोपि दीनोद्धरणाय निष्कारणकरुणावाराशिरहर्निशमेवमक्रीडत । अथैकदा पवित्रतरत्रिदशयात्रोद्देशेन सञ्जातकौतुकं साकमनेकगोपकदम्बकैरम्बिकावनमासाद्य तत्र स्नानदानपूर्वकमखर्वादरेण पशुपतिमभिपूज्य कृतनिरशनव्रतक्लशसव्यापारतया स्वपन्तमञ्जसा निजतातं भूतेन केनचिदजगरशरीरेण ग्रस्तमाश्राव्य सम्भृतवेगमागत्य तमात्मपदेन भुजगमाहत्य तस्मान्नन्दमिव तमपि शापपापप्राप्तसर्पवपुर्बन्धात् अनुपधिकृपानिधिरच्युतो व्यमोचयत् ।

सुदर्शनकरे चक्रीत्यभिधानसुदर्शने ॥
सास्य चित्रं चित्रमन्यच्छापता ह्यन्यदुर्लभा ॥ २० ॥

---

१ तस्य श्रीशस्य । २ सुखाकराः सुखमूलस्थाना विधिर्ब्रह्मा शङ्करः शिवः तौ आदी येषां ते सुरवरा इन्द्रादयो देवास्तैः स्पृहणीयं स्तुत्यं वन्द्यमानं च । ३ उपवीणितम् वीणया गीतम् । ४ अखण्डदण्डायमानानन्दम् । ५ प्रेमप्रभावभागानुभवद्भिः । ६ निर्हेतुककरुणासिन्धुः । ७ साम्बम् । ८ सुदर्शनं चक्रं करे हस्ते यस्य तस्मिन् । ९ चक्री इति अभिधानं यस्य स तथोक्तश्चासौ सुदर्शनः ( सुष्ठु पुण्यं दर्शनं यस्यैतादृशः )

दुर्दर्शनस्तदानन्दग्रासको विपदाश्रितः ॥
सुदर्शनः कृतो येन शक्तिरीशाङ्गिगा स्फुटा ॥२१॥

एवमेव कदाचिद्यमुनातटाटवीवाटिकायां साटोपभरमाभीरवधूटीभिर्विहरमाणौ रामनारायणौ वञ्चयित्वा तदबलाकलापमाकलयन्तमुदीच्यां दिशि नयन्तं शङ्खचूडाभिधं निधिपतिकिङ्कर[1]मतिरङ्काचरितमभितः समभिवीक्ष्य माभैष्टेति स्वप्रेष्ठजनं क गच्छस्यात्मवञ्चक इति यक्षराजानुचरं च ससंरम्भरवमाभाष्य विशेषरोषणः संकर्षणेन सह तमनुधाव्यमानः कपटभावनवेषो हृषीकेशः स्वभयादपहाय तदबलागणं पलायमानं च तमनुपलमात्रमाश्रितचित्रगतिः करकुलिशेन तच्छिरो विलूय सकलरत्नशिरोरत्नभूतं तच्छिरोरत्नमग्रजाय[2] निवेद्य जायाभिस्ताभिरभितः स्तूयमानगुणगाथो जगन्नाथो बलेन सह गोकुलमलंकारयामास । अथ कदाचिदल्पमपि दिनमानं[3] कल्पसमानं मन्यमाना विरहानलेन दूयमाना निजचरितमेव युगुलगीतेन युगपदेव सादरं गायमाना निजपदानन्यशरणा गोपरमणीः परमोदारदयानिधिरधिवनमन्तरेण चक्षुषा समभिज्ञाय मङ्क्षु सायमासाद्य तत्सान्त्वनविधिमनवधि रमाधवः साधयामास ।

परोत्कर्षासहिष्णुत्वं प्रायेणास्ते महत्स्वपि ॥
स्वयं शङ्करः[4] श्रीशः शङ्खचूडं[5] जघान यत् ॥ २२ ॥

---

१ कुबेरभृत्यं यक्षम् । २ अग्रजाय बलरामाय । ३ दिनपरिमाणम् । ४ शङ्खः करे यस्य । ५ शङ्खश्चूडे मस्तके यस्य स तन्नामकश्च ।

अथैवमनिशं सविलासं निवसञ्छ्रीनिवासः कर्हिचिदरिष्टनामानमवृषभासुरमपि वृषभाकारमसुरनृशंसकंसनिदेशेन गोकुलमागत्य सकलनिजजनान्सन्त्रासयन्तमत्यन्ताशान्ततयातिरस्कृतोग्रवृषभं पुरस्कृतविषाणद्वयाग्रं निजाग्रे प्रसभवेगमभिवीक्ष्य मङ्क्षु सरोजाक्षः क्षणमात्रत एव बद्धपरिकरः करद्वयेन तद्विषाणद्वयमुत्पाट्य तेनैव नद्धतिमद्धाकण्टकेन कण्टकमिव विधाय विबुधधुरंधरैर्निजजनैश्चानुसंधीयमानतया सुमनोवृष्टिपासमभितुष्टोपहतारिष्टो विष्टरश्रवाः स्फुटमेवं यावदाचेष्टत तावदेव देवैर्षिरपि परमहर्षेण मधुराधिपतेररिष्टनाशेनापुनर्भवयोग्यतेदानीमागतेति सनीतिपूर्वकमेव तत्त्वावधारणाय पुराणपुरुषस्य मायायाश्च जननं शंसनपदेन तत्त्वोपदेशकं वचनजातमेवं व्याजहार ।

राजन्नम्बरमुद्गतां कलयतां कन्यां यशोदात्मजां
कृष्णं देवकजात्मजं बलमसौ रोहिण्यथाजीजनत् ॥
त्वद्भीत्यानकदुन्दुभिर्व्यरचयत्सर्वं तदेतत्पुरे
स्याचख्यौ कलहोत्सुकः क्षितिभृते कंसाय सर्वं मुनिः २३

एतदाकर्ण्य कर्णपरुषमतिविषमरोषानलज्वालजालजाज्वल्यमानमानसः स्वमानसं सदाशंसमानोतिमानोन्नताशयो नृशंसोग्रकर्मासावुग्रसेनात्मजः सपद्येव निरवद्यनारदकृतनिवारणतया शिथिलीकृतदेवकीवसुदेवव्यापादनाभिनिवेशौ विधाय पुनस्तौ सुदृढनिगडसन्दानितौ मन्दमन्दममन्दमदपरवशः स केशिनामानं निशाचरमपि मार्तण्डमण्डलाखण्डमण्डितपुण्डरीक-

१ शृङ्गयुगम् । २ श्रीकृष्णः । ३ नारदः । ४ कंसस्य । ५ राक्षसम् ।

नयनखण्डनाय समादिश्य महामात्र[1]समूहमाहूय नारदोदितमुदन्तमस्वन्तप्रायमावेद्यमुष्टिकचाणूराभिधानमप्रतिमल्लं मल्लयुगुलं हलधरदेवकीबालप्रतिमल्लतया परिकल्प्य कुवलयापीडनामानमपि वैतण्ड[2]चूडामणिं प्रतिद्वाराग्रप्रदेशमवस्थाप्य स्वच्छाचित्तो वित्तव्ययपूर्वकमपूर्वनानाविधमञ्जुलतमरङ्गरञ्जितायां रङ्गभुवि मञ्चप्रपञ्चनाय कञ्चुकिनः प्राचो[3]धशरासनमखविलोकनापदेशेन सपरिवारमाहर्तुं[4] यशोदाकिशोरमिति यथार्थनामानमक्रूरक्रूराभिसन्धिः प्राहिणोत् । अक्रूरोपि चाक्रूरकर्मा निजगमनादर्वागेव कंसनिदेशनादुपगतवन्तमन्तकभयभयानकमधिगतहयरूपं केशिनामानं निशाचरखर्वगर्वसर्वङ्क[5]षेणमुष्टिप्रहारेण पशुमारं मारयित्वा सामोदं निजसदनमासेदिवांसं मधूसूदनमदभ्रसंभ्रमेण समुपसृत्य दण्डवत्प्रणिपत्य प्रणिहिताञ्जलिरञ्जसा दर्शितविनयापचयेन यशोदातनयेन रोहिणीभुवा च बलदेवेन सपरिरम्भकुशलप्रश्नानुयोगेन सहभोजनादिसत्कारनिकरैरतिवेलमुपलालितः स्वसमागमनकारणमविततमेव निरवशेषमकैतवमभिधाय तदनुमतेनैव तावुत्तमतमनिजशताङ्गमधिरोप्य सोपहारैरतिगभीरानन्दवृत्तिभिराभीरैर्नन्दादिभिरनुगम्यमानः सौम्यमनाः सनातनगुरुमनुक्षणमीक्ष्यमाण सानन्दं ससाध्वसं च कंसराजमानमधुरानगरमचीचलत् ।

वार्तामिमामशनिपातनिभां निशम्य
यामादिशत्परवशाः सुदृशो दशां ताम् ॥

---

१ महामात्रसमूहं हस्तिपकसमूहम् । २ हस्तिमुख्यम् । ३ इन्द्रशरासनवज्ञदर्शननिमित्तेन । ४ आनय । ५ नाशकारणेन ।

संसारसौख्यविरहेण कठोरचित्तं
वक्तुं यतेत कतमः शुकमन्तरेण ॥ २४ ॥
ब्रह्मपुत्रयदातातरमणीयाभिधः कथम् ॥
स पापपरिपाकोयमक्रूरः क्रूरचेष्टितः ॥ २५ ॥
दयोदारान्दारान्पुरविजयिनः प्रार्थितवती
मुरारिर्मे भूयान्मदनमदनोयं प्रिय इति ॥
अनाथं नैवाहं दुरितभरिता जातु विरहो
न भूयादेतस्येत्यहह निहता हन्तविधिना ॥ २६ ॥
सम्भुक्तोपि मुहुर्मुहुर्नव इव प्रेमास्पदं साध्वसा
स्पष्टो दुर्लभतामनोहरतरं संमोहनश्चेतसः ॥
कैवल्योपरतोचितोपकरणग्रामस्य सौख्याकरः
शौरे चौर्यरतोत्सवस्तव कथं नाहं स्मरिष्यामि तम् २७॥
निमिषं त्वयि लीलया विलीने न बलं वा विपदं बुधावमज्जम् ॥
रमणं शरणं ममाद्य शौरे नियतं त्वद्विरहानलासहायाः ॥२८॥

एवमतिवेलं विलप्य विलुप्यमानविवेकपल्लवो बल्लववल्लभानिवहस्तल्लोभपरिवाहभरसम्भृतः निर्भरप्रस्थानलालसतया शताङ्गसङ्गतमनङ्गदीपकं मुररिपुं परिववार चिरतरमरोदीच्च ।

विरहानलसन्तापसम्भवस्तरलभ्रुवाम् ॥
न मङ्गलविघाताय सोभूदश्रुपरोद्गमः ॥ २९ ॥
ततो निपुणमाश्वास्य वधूर्मधुरया गिरा ॥
निवर्त्य च रयात्प्रायाद्यमुनामपनागपाम् ॥ ३० ॥

---

१ पुरविजयिनः शङ्करस्य दयादारान् दयायुक्तान् दारान् स्त्रियं पार्वतीम् । 'दाराः पुं भूम्नि' इत्यमरः ।

बलादपि निवारिता विरहभीरवो[1] भीरवो[2]
विसृज्य सकलं ययुर्झटिति कृष्णवर्त्माश्रयम्[3] ॥
तथापि न समीहितं प्रियसमागमं भेजिरे[4]
न जारदयिताश्रयादिह किलापरं कारणम् ॥ ३१ ॥

तदनु नयनपथमतीतवति भगवति ।

ततः साक्षात्कृते खेदमवाप्य सुदृशः परम् ॥
चक्रुरस्तसमस्ताशानिवृत्त्यभिमुखं मनः ॥ ३२ ॥

तदनु यदुनन्दनाध्यासितस्यन्दनमतिप्रतीविवेश्य नित्यावश्यकं सिसाधयिषुरक्रूरः शमनभगिनीपानीयमवगाह्य[5] करुणापूरमपि समुन्नतप्रवणमसुकरदर्शनमपि[6] सुदर्शनकरमब्जासक्तकरमपि[7] निरन्तराब्जपरिपन्थिकरयुगुलमविरतानुषक्तगदमपि लोकोत्तरकमनीयविग्रहं दिव्यगन्धानुलिप्तमपि निर्लेपमनावृतमूर्तिमपि पीताम्बरावृत्तमध्यभागं माधवमपि[8] पलाशविकासपरिपन्थिनं विधुमपि[9] विगतकलङ्कमशेषाधारमपि शेषाधारं मीनरूपमपि सुधीवरदुरवापमुप[10]गतकमठाकृतिमपि भूभारमसहमानमविरतवसुमतीदयितमपि का-

---

१ विरहाद्भीरवो भीताः । २ भीरवः स्त्रियः 'अङ्गना भीरुः कामिनी वामलोचना' इत्यमरः । ३ दुष्टमार्गाश्रयम् पक्षे कृष्णभक्तिमार्गाश्रयम् । ४ प्रापुः । ५ यमुनानदीप्रवाहम् । 'शमनो यमराड्यमः' इत्यमरः । ६ पूरो नामोदकपूरः कथमुन्नतप्रवण इति विरोधप्राप्तिः परिहारस्तु सुकर एव । ७ सुष्टु दर्शनं करे यस्येति परिहारः । ८ माधवं वसन्तामिति विरोधः । ९ विधुश्चन्द्रः इति विरोधः विष्णुरिति परिहारः । १० सुष्टु ये धीवराः कैवर्ताः तानवाप्तुमशक्यस्तम् पक्षे सुधीषु वराः ये ज्ञानिनस्तानवाप्तुमशक्यः ।

दाचित्कभूदारभावमालम्बितनरसिंहरूपमपि परिपालितमदावलम-
त्युन्नतमपि परिगृहीतवामनभावमनतविक्रममपि त्रिविक्रमं निगृ-
हीतभक्तबलिमपि परिगृहीतभक्तबलिं निखिलोदारशिखामणिम-
प्यङ्गीकृतकुप्रतिग्रहं राजरुधिरविरचितपितृतर्पणमपि विहितरा-
जवंशाभ्युदयं शौर्यौदार्यमहार्णवमपि दूरीकृतमहार्णवं उदात्तवृत्ति-
मप्युदासीनस्थितिं मनुष्यधर्मानुवर्तिनमपि पौलस्त्यपरिपन्थिनम-
मोघशरमपि स्वीकृतशरभङ्गमुपगतबलिभावमपि सुत्रामसहजमैत्र-
पात्रं राघवमपि राघवालयबन्धकमर्जुनगुणप्रणयिनमपि तमालनी-
लं चक्रिणमपि विगतभोगाभिलाषं बभ्रुमपि भुजगराजवधादरं
पुष्पवद्विलोचनमपि कमनीयलोचनं विष्वक्सेनमपि कल्पिताद्वैत
मस्वप्नरक्षकमपि निद्रानुरतं भववल्लभमपि भवसमुन्मूलनैकतानं
चतुर्दशभुवनभरणमपि त्रिविष्टपपरिपालकं निखिलखेचराधिगम्य-
मपि बुधैकरम्यं मुकुन्दमपि किन्नरेशरक्षकानवेक्षितं धार्मिकजद-
यितमपि पुण्यजननिषूदनलम्पटमविरतपरितृप्तमपि भक्तैकतत्परं
सकलागमशिखरलक्ष्यमपि न्यग्रोधदलैकशायिनं शमप्रधानमपि
शतमन्युसंश्रयं राजराजपक्षपातिनमपि दोषाकरविपक्षमपरिमितरु-
गाश्रयमपि विगतशोकमपुनर्भवपदमपि सर्वपुनर्भवपदं पुराणपुरु-
षमपि निर्जरं हंसमप्यमानसवृत्तिमजमपि पितामहोपपालितमन-

---

१ कुः कुत्सितार्थे पक्षे कुः पृथिवी ।२ मनुष्यधर्मा कुबेरः पुलस्त्यपुत्रोयम् । 'मनुष्यधर्मा धनदो राजराज' इत्याद्यमरः पक्षे मनुष्यधर्म मानुषत्वमनुसरतीति । ३ शरभङ्गं नामाश्रम् अथ वा स्वार्थ शराणां भङ्गो दारणम् ।

न्तमपि संवर्धितमरुद्गणं जनार्दनमपि करुणातरङ्गितान्तरङ्गमतिदक्षिणमपि सकलोत्तरमपूर्ववृत्तिमप्यपश्चिमसाधुशीलं सदरिकरमपि सदरिनिकरभञ्जकं सदरमपि निर्भयं पङ्कजातकरमपि पङ्कजातापहरणदीक्षितं सगदमप्यगदंकारमण्डलतेजःप्रकाशकं मण्डलाग्राश्चितमपि विप्रमण्डलाग्राश्चितं सदाचरणदर्शकमपि कदाचरणरञ्जितं च भगवन्तमिन्दिरालंकृतहृदयमन्दिरमिन्दुसुन्दरमुखं दयोदारं सकलाधारं वराभयार्पणधुरंधरं दामोदरमद्राक्षीदस्तौषीच्च तथा हि ।

ददन् भक्तेभ्योस्मिन्पदमपि दधानोपि सविधं
प्रपन्नानामेषां किमपि पदभावं वितनुषे ॥
निवृत्ता वर्तन्ते लघु यदधिगम्येतरसुरा-
न्प्रपन्नस्त्वांपङ्गुर्भवति पुनरावृत्तिविधुरः ॥ ३३ ॥

पुमांसं स्वीकर्तुं कमपि भवरोगं प्रकृतिजं
बलात्कृत्वा कृत्वा विषममथ वित्तान्यपहरन् ॥
ध्रुवस्ते मृत्युर्नो यदि भजसि मामेव शरणं
प्रकल्प्यैवं त्रासं व्रजसि परमार्तान्बहुमातिम् ॥ ३४ ॥

अविश्रान्तं सेवाकृतुफलमपेक्ष्यं चिरचितं
फलं भोग्यं कृत्वा कृतमपि समर्प्य तव फलम् ॥
भवन्त्येवं प्रान्ते फलममृतभावादनाधिकं
न दृष्टेयं सेवा मधुमथन मायां तव नुमः ॥ ३५ ॥

---

१ जनानर्दयतीति जनार्दनः । २ सदरिः सच्छंखः । ३ गदोरोगः पक्षे गदया सहितः । ४ अगदंकाराः नीरोगकारिणः । 'कारसत्यागदस्ये'ति मुम् । ५ कल्याणदाचरणशोभिदम् ।

श्रितानां यद्भाग्यं हरासि कलयेनुग्रहमिति
प्रतार्यास्तामेतद्विगतपुनरावृत्तिनि पदे ॥
अचन्द्रादित्यत्वं क्वचन हृदयस्याप्यसुगमे
त्वदेकद्यौत्ये यत्क्षिपसि तव युक्तं कथमिदम् ॥ ३६ ॥

भावत्कं गुणजालमस्फुटतनुः पूर्वं प्रकाश्य द्विजाँ-
ल्लग्नान् भ्रान्तिभृतोपि तत्र तनुषे पश्चाद्गणेभ्यश्च तान् ॥
आतन्वन्कृतपक्षपातमगतिं नैता निजान्तर्गता
सद्गीतद्विजमुक्तिदानकरुणा दृष्टा कृता वा न ते ॥३७॥

कारुण्याब्धिरिति प्रथा[1] तव भुवि ख्याता च मे दीनता
दासोहं तव वेति जृम्भति मुहुर्दैन्यं यदद्यापि मे ॥
दोषः किंनु ममैव सोयमथ वा त्रैलोक्यतातस्य ते
न्यायो नेह समंजसः कुरु मुहुः संरक्षणं श्रेयसे ॥३८॥

अ।कल्मषप्रशममाकलये विलम्ब-
मित्थं प्रतारयितुमस्ति यदि प्रयत्नः ॥
पापं त्वदङ्घ्रिकमलाश्रयिणावधीति
जाने न किं नु निगमप्रकरप्रवादम् ॥ ३९ ॥

समनन्तरमर्तर्हिते भगवति तूष्णिम्भूय स रयादुन्मज्ज्य च शर्ता[2]-ङ्गसङ्गतमक्रूरं वासुदेवः किमपूर्वमालोकितवानसीति सकपटमपृच्छत् । सोपि सकलविस्मयभाजनं भवन्तमन्तरेण न किञ्चिदित्युत्तरयन्प्रेरितरथतुरङ्गमः सपदि मधुरानगरपरिसरमुपगम्य तत्र

---

१ प्रथा नाम । २ शताङ्गसंगतं रीमाश्वयुक्तम् ।

सपरिवारं केशवं निवेश्य प्रविश्य च स्वयं नगरं कंसाय तदागमनोदन्तमावेद्य तदैव निजसदनमाससाद ।

मधुरां मधुराकारामवलोकयितुं रतः ॥
चचाल कल्पिताकल्पः सबलो बलिशासनः ॥ ४० ॥

अथ पुण्डरीकलोचनावलोकनकुतूहलसमाकुलपौरजनकलकलकवलितशब्दान्तरममरनगरमपि नैतदुपममिति निषीदद्भिरिव चलाचलचैलाञ्चलैर्निकेतकेतनैरुपशोभमानामवनिकामिनीताटङ्कायितकनकप्राकारामभ्रंलिहशातकुम्भसौधामविरतधारायन्त्रविगलितसलिलशीकरसंसिक्तविपणिसरणिमाबद्धमौक्तिकतोरणां मृगमदघनसारकुसुमसौरभविजृम्भितां प्रत्यादेशमिव त्रिदशालयस्य वीप्सामिव पितामहलोकस्याम्रेडितमिव भोगावत्याः प्रतिबिम्बामिव वैकुण्ठस्य द्विर्भावमिव कैलासस्य सकलभोगानुकूलां अविकलविपणिप्रसारां मधुरां प्रविश्य नागरसुन्दरीनयननलिनैरभ्यर्च्यमानो लाजैरवकीर्यमाणो निरन्तरं लोकशब्दैरभिवन्द्यमानो वन्द्यमानश्च निश्चयेनाच्युतांशोयमिति बुद्ध्या बुद्धिविशारदैर्यशोदानन्दनः सानन्दमग्रजेनानुगैश्च साकमधिगच्छन् राजाध्वनि स्वीकृतधौतांशुकनिकायं कमपि राजकीयं रजकमद्राक्षीदभिलषितवासश्च यमयाचच्च ।

देहि त्वदीयं मृदुनो दुकूलजालं विशालं सुकृती तदा स्याः ॥
यत्रेह दोषानमृतावसेकैर्घ्नतो नृणां युक्तमिदं तवैव ॥ ४१ ॥

१ गृहस्योपरितनपताकाभिः । २ आवृत्तिः ।

एवं सविनयमभ्यर्थ्यमानमेनं दुर्मनीष एवमधिकपटवानित्य-धिकपटवचनमेव प्रत्यवादीत् ।

विना वसनमीदृशं मृदु पटच्चरं[1] कच्चरं[2]
वनेचर गवांपते पृथुक ते कथं रोचते ॥
तथापि पृथिवीभुजापरिगृहीतमेतच्चिरं
भवत्यपदृशं बलादपहरं च हा हा तव ॥ ४२ ॥

एवमतिनिगूढविप्रियजल्पाकमल्पायुषमेनं नखरशिखरेण स-लीलमपास्तमस्तकं विधाय तदनु ससाध्वसमंशुककोशानपहाय तदनुचरनिकरे प्रतिदिशमविवशभावेन पलायमाने तदीयकर-गलितदुकूलजालं यथाभिलाषं ससन्तोषमादाय निजोपयुक्तशेष-मनुचरेभ्यो वितीर्य[3] च पुनरन्यतो गत्वा वायकनामानं कमपि कुविन्दं[4] निजाङ्गे यथोचितवासोविन्यासकारिणमालोच्य तत्प्र-तिमूल्येनेव स्वसारूप्यपदप्रतिपादनेन समनुगृह्य तदनु च सुदाम-नामानमवगतभगवत्प्रभावं कमपि मालाकारं तत्समर्पितनाना-विधसुगन्धिकुसुमदामसमुदायं समाधानपूर्वकं प्रसाद्य समाल-म्भितविलेपभाजनामजाननां कुब्जामद्राक्षीत्[5] । सा च याचि-ता चक्रधरेण चिन्तिततदङ्गसङ्गा नूनं प्रभूतकाश्मीरमृगमद-घनसारसौरभेण गन्धसारेण निपुणतरमङ्गरागेण तदङ्गमभ्य-र्चयत् । भगवानपि समुदितदयारसः सपदि कुटिलाङ्गामेना-मनङ्गसंमोहनास्त्रमिवाकुटिलाङ्गां[6] विधाय समयान्तरे तदङ्गसङ्ग-मङ्गीचकार । स्थाने हि तत् ।

१ पटच्चरं चीरं वस्त्रं वा । २ मलिनम् । ३ दत्त्वा ।४ कुविन्दं वस्त्रकारि-णम् । ५ गन्धलेपकारिणीं दासीम् । ६ सुन्दराङ्गीम् ।

अपि पृथुवंशसमुत्थो गुरुगणनम्रोपि न कथं स्यात् ॥
भग्नमहत्तरकाष्ठो मार्गणसंरम्भमसहमानोसौ ॥ ४३ ॥
धृतवामनभावोसौ कुब्जेयमनयोर्युतिः[1] ॥
अनुकूलगुणा केन नेयं समभिनन्द्यताम् ॥ ४४ ॥

अथ धनुःसंविधं[2] मधुसूदनः समधिगम्य रटत्स्वपि रक्षिषु[3] । त्वरितमेव तदादाय सज्जं च विधाय लीलयैव बभञ्ज । साम्प्रतमेतत् । अनन्तरमकालसमुदितप्रलयप्रकल्पितजीमूतराजिगर्जितप्राग्भार[4]प्रतिभटोद्भटधनुर्भङ्गघोषनिबिडिते जगदण्डकरण्डपिचण्डे[5] गृह्यतामयं निगृह्यतामिति सत्वरमापतन्तः कार्मुकपरिपालकाननेकाञ्छरासनशकलेन शकलितानाधाय तन्निशमनविवशाशयं भोजराजमपि तृणाय[6] मन्यमानौ समासादितानन्दौ वसुदेवनन्दनौ पुटभेदनसम्पदं सम्पूर्णतया निर्वर्ण्य पुनः स्वावासमावसताम् । कंसोपि तदाकर्ण्य कर्णपरुषं यावत्तमिस्रं[7] मनुज्झितजागरं प्रभाते मल्लानां महाहवमहोत्सवमकल्पयत् ।

ततः सपदि दुन्दुभिध्वनिरभूदभूतोपम-
स्तमम्बुधरडम्बरं कतिचिदूचुरन्ये पुनः ॥
प्रचण्डगरुडध्वज[8]क्षपितधन्वघोष[9]स्फुट-
न्महाण्डजठरक्षरत्प्रचुरबाह्यनीरारवम् ॥ ४५ ॥

---

१ संयोगः । २ धनुष्य समीपम् । ३ रक्षणकर्तृषु । ४ प्राग्भारः पर्वतभागः । ५ पिचण्डः अन्तर्भागः । ६ तृणमिव तुच्छं 'मन्यकर्मण्यनादरे विभाषाप्राणिषु' इत्यनादरे चतुर्थी । ७ सर्वरात्रौ । ८ गरुडध्वजो विष्णुः । ९ धन्वघोषो धनुर्घोषः ।

आहूताविव सस्नेहं दुन्दुभिध्वनिनामुना ॥
तावगातां सकुतुकौ चतुःसागरकालिपा(?)॥ ४६ ॥

गत्वा च रङ्गद्वारनिवेशितमम्बष्ठाधिष्ठितं[1] कुवलयापीडनामानं मदावलमवलोक्य पन्थानमलभमानस्तमधोरणमेवमधोक्षजोसाधारणरणधुरन्धरो वारणनिवारणार्थमभाणीत् । अरे रे सर्वदैवारणे वारणनिर्वाणार्पणमतिनिषिद्धमुद्धोषितं विचक्षणैरित्यपसार्यैनमनर्गलं मदावलमुतो मार्गान्निजनिर्गलमदावलेपं चापहाय रक्षस्व जीवितमनुजीविपदजीवनमिति ।

नाङ्गीकरोषि मम चेद्गिरमङ्ग तस्मा-
द्वानिर्न मे शमनमन्दिरभागभाक्[2] स्याः ॥
स्याद्वारणे किमु तदा तव शक्तिरेषा
स्वात्मावबोधविधुरस्य वृथा श्रमस्ते ॥ ४७ ॥

एवमरुन्तुन्दभाषणरोषणाधोरणप्रेरणप्रकुपितमनसि संमुखमभिपतति कीनाशपाशसङ्काशेन[3] शुण्डादण्डेन धृतवति कुञ्जरे सचमत्कारमुन्मोच्य चरणतले तत्रापि करं प्रसारितवति सलीलं लाङ्गलमवलम्ब्य झञ्झासमीरसमीरितघनलीलयैव शौरिरेनं दूरतःप्रेरितवान् । पुनरेनमतिरोषात्तरसैवाभिपतन्तमभितः परिभ्रमन्नन्तरान्तरा तमेव निहत्य स्वयमताडितो नितान्तपरिश्रान्तमाधाय सत्वरं करे गृहीत्वा मह्यामसह्यबलमपि लीलयैवापातयत् । उत्पाटितेन तदीयदन्तेनैव समूलघातमवधीच्च ।

---

१ अम्बष्ठाधिष्ठितं अम्बष्ठनाम्ना हस्तिपकेन युक्तम् । २ यमगृहभागस्थितः मरणभाक् इत्यर्थः । ३ कीनाशो यमः ।

हरिर्हन्तु किशोरोपि करिणं किमिहाद्भुतम् ॥
त्रांतो मतङ्गजो येन चित्रं पुनरिदं परम् ॥ ४८ ॥
आदाय दन्तिनो दन्तं कीर्त्तिमूर्तिमिवात्मनः ॥
रङ्गं हरिरगादाशु बलोपि बलिनो वरः ॥ ४९ ॥

ततः ।

कामिन्यः कुसुमास्त्रविभ्रमझरी सर्वस्वसारास्पदं
संसाराहितशोककीर्णहृदयाः कारुण्यवारांनिधिम् ॥
मल्लाः कल्पविरामकालविलसत्कालाग्निरुद्राकृतिं
मुग्धं दुग्धगलं शिशुं च पितरौ गोपाः सखायं स्वकम्॥५०॥
तत्वं दुर्गमदुर्गमागमशिखाशाखाप्रवालं बुधाः
कंसः कालमकालजं च कमला नीलोपलाभावहम् ॥
सारं किञ्चन पूर्णपात्रमपरे गोपैः समानं परैः
शौरिं रङ्गगतं तदा बुबुधिरे रामं च कामोपमम् ॥ ५१ ॥

युग्मम् ।

सप्रेमसंलपितुमन्वयितुं निरोद्धु-
मालिङ्गितुं रमयितुं परिचुम्बितुं च ॥
का वा तदा युवतयो नतमानमन्त्यः
सापत्रपा व्यधित किन्तु तदन्तरायम् ॥ ५२ ॥

एवमतिसंविधानेन रङ्गधरणिमनुविशति हृषीकेशे स कंसोपि नन्दसुनन्दादीनाभीरवरानर्पितोपहारान्विहारोपगतराजपुरुषाना-

---

१ त्रातः मुक्तिं प्रापितः । २ कल्पान्तकाले शोभायमानः कालाग्निर्नाम रुद्रस्तमिव । ३ वेदान्तशास्त्रशिखास्कन्धानां प्रवालम् अग्रमित्यर्थः ।

लम्बितस्थलविशेषावलोकनव्याकुलानवलोक्य सकुतूहलमेकत्र मञ्चाञ्चले समुपवेश्य स्वयमपि भाविनीमूर्ध्वगतिमासूचयन्निव कश्चिदुच्चतरं मञ्चवरमध्यमध्यातिष्टत् । (यस्मिछकरदार?) ।

इतिश्रीमद्भागवतचम्पूकाव्ये कालिदासकृते तृतीयो विलासनामकस्तबकः ॥

तृतीयः स्तवकः ।

॥ श्रीशं वन्दे ॥

चाणूरो हरिमथ सादरो नियुद्धे
संमुह्यन्निदमवदन्मदावलेपात् ॥
सुव्यक्तं सहजबलाश्रितेपि तस्मिन्
मन्वानो बलैविरहं कथं न मूढः ॥ १ ॥

बलिनाविति विश्रुतौ युवां कुतुकान्नूनमिहानयत्प्रभुः ॥
परिदृश्य नियुद्धकौशलं क्षममेतस्य हि चित्तरञ्जनम् ॥ २॥
एवमभिदधानमनात्मवेदिनं मधुसूदनः सकपटं प्रत्यवादीत् ।
महीपतेरस्य मयोपकण्ठे प्राकाश्यते प्राण इदं हितं नः ॥
तथापि बालाननुरूपकृत्ये प्रवर्तना तेन शुभा विभाति ॥ ३ ॥

उदञ्चद्दैन्ययाप्येवं छादितोत्साहया गिरा ॥
तस्याशयमजानानो बालिशः स न माधवः ॥ ४ ॥

---

१ सहजबलाश्रिते नैसर्गिक बलेन युक्ते पक्षेबन्धुना बलरामेण युक्ते । २ अबलम् । ३ स्वस्वरूपम् ।

निहत्य केशिनं शूरसिन्धुरं गन्धवन्धुरम् ॥
वालभावप्रकाशास्ते वालभावप्रकाशनम् ॥ ५ ॥

एवमीरयति चाणूरे गूढाशयो भगवानपि बाढमित्यभिधाय नियुद्धविद्यापारीण इव परिकलिततरतरोरःस्थलमनुस्थपुटितास्थिकूटमेनमुपलसमशरीरं शक्तिधरशरः क्रौञ्चाचलमिव सकललोकचालकोपि कितवबालकोभिचचाल चाणूरं रौहिणेयोपि मुष्टिकमिति ।

कासौ शिरीषसुकुमारवपुः किशोरः
कायं महाभुजगभोगकरालरूपः ॥
धर्मव्यतिक्रममिमं परिपश्यतोस्य
श्रेयः कथं भवतु राजकुलाधमस्य ॥ ६ ॥

एवं नितान्तचिन्तासन्तानं दन्तुरितान्तरङ्गेषु नागरकेषु ।

उद्भूतसिंहरवमुद्गतवीरवाद-
मुद्यत्परिभ्रमणमाहितरन्ध्रमार्गम् ॥
सोत्सपर्णं मिलद्धयक्रमणं सतापं
सोत्पातमद्भुततरं मृधमाविरासीत् ॥ ७ ॥

स्वेदाम्बुजालकपरीतमुदीतकम्प-
मालोललोचनमुरुश्वसितप्रचारम् ॥
म्लानं विलोलदलकं मुखमस्य वीक्ष्य
पाषाणकर्कशहृदोपि तदा दयार्द्रः ॥ ८ ॥

ततः ।

१ वीराग्रे सरम् । २ षडाननबाणः । ३ बलरामः । ४ शिरीषपुष्पमिव मृदुशरीरः । ५ मृधं युद्धम् ।

किं बाल इत्यवमतैः किमु वीरवादै-
र्मा गाः प्रमादमुदितः फलकाल एषः ॥
इत्याकलय्य मधुरां गिरमस्य शौरे-
रानन्दबन्धुरमभूद्धृदयं जनानाम् ॥ ९ ॥

एवमभिधाय सचमत्कारमुत्पत्य तदीयकरतलयुगुलमालम्बु-भुजङ्गमिव विहङ्गाधिपो दिवि समुत्पात्य परिभ्रमय्य च सुचिर-मतिमात्रझर्झरसकलसंधिबन्धमुद्गीर्यमाणरुधिरधारं चाणूरं मुररि-पुरधिवसुन्धरमपोथयत् । सङ्कर्षणोपि मुष्टामुष्टिना कृतावष्टम्भं मुष्टिकमतिनिष्ठुरमुष्टिप्रहारेण सशरीरबन्धमिव कंसमनोरथब-न्धुमध्यवनि न्यपातयत् ।

चाणूरमुष्टिकाघातमखसम्पूर्तये ततः ॥
पूर्णाहुतिरभूत्कूटः शलस्तोशलकोपि च ॥ १० ॥

मल्लेषु पञ्चसु हतेषु सहावशिष्टै-
र्दैवं च कंसनृपतेरतनोत्पलायम् ॥
भेरीध्वनिर्गुरुतरैर्जय जीव साधु
वत्सेति पौरवचनैः सममाविरासीत् ॥ ११ ॥

दुर्दान्तान्नगरान्निरस्य पृथुकान्नन्दं बधान द्रुतं
गोपालान्विधनान्विधेहि जहि मे तातं सपत्नीयुगम् ।
प्राणानानकदुन्दुभेर्हर गुरोर्मायाविनामित्यलं
क्रोधात्तूर्यरवं निवार्य नृपतिर्भृत्यान्निजानादिशत् ॥ १२ ॥

---

१ दुर्वीरैतैः सह । २ नगराद्बहिः कृत्वा । ३ निर्द्रव्यान्कुरु इत्यर्थः ।

एवमनल्पजल्पमल्पायुरवधावभिदधाने भोजकुलापसदे संसदि कंसे सपादि भगवानप्यतिरोषणस्तरसा रसातलादुत्प्लुत्य विक्लवचेतसमुच्चतरमञ्चशिखरमारूढमगूढवैरमेनमतिरंहसा केसरीव करिणं करग्राहं गृहीत्वा करतलेन कुन्तलकलापमाकलय्य सलीलमवनितले निपात्य स्वयमपि तदनु तदुपरि गिरीन्द्रगौरवो वाप्लुवत् ।

गणरात्रमसौ कंसश्चिन्तारचितजागरः ॥
परिश्रान्त इवाश्रान्तं दीर्घनिद्रां[1]मुपादधे ॥ १२ ॥

ततः ।

हाहाशब्दो भुवि सममयन्मानुषाणां विषादै-
र्हाहाशब्दो दिवि दिविषदां प्रादुरासीत्प्रमोदः ॥
कंसः खिन्नैरवनिवनितालिङ्गितोऽदर्शि मर्त्यै-
र्गीर्वाणैश्च[2] त्रिदिवललनाश्लिष्टमूर्तिः प्रहृष्टैः ॥ १३ ॥

अथ कंसमुखानष्ट रुष्टानथ सहोदरान् ॥
हरिराहवकण्डूलान्[3] पशुमारममारयत् ॥ १४ ॥

स्थाने हि तत् ।

आयान्तु नाम युधि कंसमुखाः परासु-
मुत्कामिनः प्रणयिनः प्रसमीक्ष्य कंसम् ॥
अभ्यर्णवर्तिनि हरावतिरोषणे तु
तेषां नितान्तमफला खलु जीवनाशा ॥ १५ ॥

अथ निजनाथप्रमथनवार्ताकलापार्ताः संगतमनोगदागलद

---

१ दीर्घनिद्रां मरणम् । २ देवानाम् । ३ युद्धदुर्मदान् ।

किं बाल इत्यवमतैः किमु वीरवादै-
र्मा गाः प्रमादमुदितः फलकाल एषः ॥
इत्याकलय्य मधुरां गिरमस्य शौरे-
रानन्दबन्धुरमभूद्धृदयं जनानाम् ॥ ९ ॥

एवमभिधाय सचमत्कारमुत्पत्य तदीयकरतलयुगुलमालम्बु-भुजङ्गमिव विहङ्गाधिपो दिवि समुत्पात्य परिभ्रमय्य च सुचिर-मतिमात्रझर्झरसकलसंधिबन्धमुद्गीर्यमाणरुधिरधारं चाणूरं मुररिपुरधिवसुन्धरमपोथयत् । सङ्कर्षणोपि मुष्टामुष्टिना कृतावष्टम्भं मुष्टिकमतिनिष्ठुरमुष्टिप्रहारेण सशरीरबन्धमिव कंसमनोरथबन्धुमध्यवनि न्यपातयत् ।

चाणूरमुष्टिकाघातमखसम्पूर्तये ततः ॥
पूर्णाहुतिरभूत्कूटः शलस्तोशलकोपि च ॥१०॥

मल्लेषु पञ्चसु हतेषु सहावशिष्टै-
र्दैवं च कंसनृपतेरतनोत्पलायम् ॥
भेरीध्वनिर्गुरुतरैर्जय जीव साधु
वत्सेति पौरवचनैः सममाविरासीत् ॥ ११ ॥

दुर्दान्तान्नगरान्निरस्य पृथुकान्नन्दं बधान द्रुतं
गोपालान्विधनान्विधेहि जहि मे तातं सपत्नीयुगम् ।
प्राणानानकदुन्दुभेर्हर गुरोर्मायाविनामित्यलं
क्रोधात्तूर्यरवं निवार्य नृपतिर्भृत्यान्निजानादिशत् ॥१२॥

---

१ उर्वरितैः सह । २ नगराद्बहिः कृत्वा । ३ निर्द्रव्यान्कुरु इत्यर्थः ।

एवमनल्पजल्पमल्पायुरवधावभिदधाने भोजकुलापसदे संसदि कंसे सपादि भगवानप्यतिरोषणस्तरसा रसातलादुत्प्लुत्य विक्लवचेतसमुच्चतरमञ्चशिखरमारूढमगूढवैरमेनमतिरंहसा केसरीव कारिणं करग्राहं गृहीत्वा करतलेन कुन्तलकलापमाकलय्य सलीलमवनितले निपात्य स्वयमपि तदनु तदुपरि गिरीन्द्रगौरवो वाप्लुवत् ।

गणरात्रमसौ कंसश्चिन्तारचितजागरः ॥
परिश्रान्त इवाश्रान्तं दीर्घनिद्रामुपादधे ॥ १२ ॥

ततः ।

हाहाशब्दो भुवि सममयन्मानुषाणां विषादै-
र्हाहाशब्दो दिवि दिविषदां प्रादुरासीत्प्रमोदः ॥
कंसः खिन्नैरवनिवनितालिङ्गितोऽदर्शि मर्त्यै-
र्गीर्वाणैश्च त्रिदिवललनाश्लिष्टमूर्तिः प्रकृष्टैः ॥ १३ ॥
अथ कंसमुखानष्ट रुष्टानथ सहोदरान् ॥
हरिराहवकण्डूलान्पशुमारममारयत् ॥ १४ ॥

स्थाने हि तत् ।

आयान्तु नाम युधि कंसमुखाः परासु-
मुत्कामिनः प्रणयिनः प्रसमीक्ष्य कंसम् ॥
अभ्यर्णवर्तिनि हरावतिरोषणे तु
तेषां नितान्तमफला खलु जीवनाशा ॥ १५ ॥

अथ निजनाथप्रमथनवार्ताकलापार्ताः संगतमनोगदागलद

---

१ दीर्घनिद्रां मरणम् । २ देवानाम् । ३ युद्धदुर्मदान् ।

ङ्गनाः सरभसमाचक्रुशु दुराचक्रन्दुरतिकरणमेवं विलेपुश्च ।

हा नाथ हा प्रियतम त्रिजगल्ललाम
कस्मादिमामधिगतोसि दशामकस्मात् ॥
नीतः प्रतार्य यदि यासि सुरूपलोल-
लोलाभिरात्तरतिभिः सुरसुन्दरीभिः ॥ १६ ॥
उद्यन्मानामवनिवनितां त्वच्चरित्रैरमित्रै-
रालिङ्ग्यैनामनुनययितुः प्रेमभारानुबन्धात् ॥
तादृक्षस्त्वं विरहविधुरां प्रेयसीं नेक्षसे मां
नापि ब्रूषे कथय करुणप्राणनाथ प्रसीद ॥ १७ ॥
अपि मां (स)वृताननाभिसर्गादनुनेतुं न हि सत्वरा संशकम्॥
स भवान्कुररीविरावभङ्ग्या विलपन्त्यां मयि मामुपेक्षते किम् १८
हृदयं न तृणाय मन्यते मे सुरनारीरतिलोलुपं प्रियायाम् ॥
इति शश्वदुदीर्य तद्वशस्त्वं न मृषा भाषणचातुरीधुरीणः ॥१९॥
कथमङ्कमपास्य ते सशङ्कं त्रपया गर्भगृहान्धकारलीना ॥
दिवसानवसानमीहमाना प्रिय नेष्यामि मुधा कृता सुजाता २०
एवमतिवेलं विलाप्य समीपवर्तिनं वासुदेवमेवमवादिषुः ॥
कारुण्यवाराकरधीः कथं ते क्रूरप्रकारा यदि वा तवाभूत् ॥
मदीयसौभाग्यसमीपकेन समीरणाकर्मसमीपकेन(?) ॥ २१ ॥

---

१ कुररी नाम पक्षी तच्छब्दस्य भङ्गिः छलः तच्छब्दवदित्यर्थः अतिदीनस्वरेणेतियावत् । 'व्याजच्छलनिभे भङ्गिर्वैदर्भीतनमौलिके' ति रभसः ।२ सुरनार्यां रतिश्च लोलुपा लुब्धा यस्मिन् एवंभूतम् । ३ भाषणचातुर्याग्रेसरः । ४ दिवसस्यानन्त्यम् ।

यद्राजकुञ्जररमारतवैरिणं ते
युक्तं हरे विकरुणं न्यवधीर्वृथेति ॥
तस्यानिशं सहचरीर्विधिनाप्यवध्याः
क्रूरा गलन्मदभराः किमुपेक्षसे नः ॥ २२ ॥

एवमुपरचितजीवितोपक्रोशं क्रोशन्तीस्तदप्यपाणिगृहीतीरश्वस्य मातापितरावपि कारागाराद्विमोच्य यदुनन्दनौ सानन्दं मुहुर्मुहुरावन्द्य मुहुरालिङ्ग्य निरन्तरानन्दबाष्पाभिषेकेण कंसशरासनदीक्षासमापकमवभृथमिव दधानौ पितरौ मुकुन्दः मधुरमिदमवादीत् ।

न बाललीलाभिरनन्दयं वां न वारितो वा विपदाप्रवाहः ॥
तनूजभावान्मम किं तु हन्त विमुक्तिमात्रं फलतामयासीत् २३

प्रबोधयेद्यः सुतनिर्विशेषो द्विजं विजातीयमपि स्वकृत्यैः ॥
बालस्तु लोके पुरुषोत्तमस्य दूरे सवित्रो रविनन्दनं मे २४ ॥

भाषितैर्मधुरैरस्य तत्त्वसर्वङ्कषैरपि ॥
लोकानुकारिभिर्युक्तं मोहितौ पितराविति ॥ २५ ॥

तदनु यदूनामवनिपरिग्रहो ययातिशापमन्तरायमावेद्य मातामहमुग्रसेनमेव निखिलानुमतेन सानुनयमुररीकृतराज्यभारमारचय्य नन्दगोपमपि बहुभिरनर्घ्यतरपारिबर्हविशेषैः परितोष्य सप्रार्थनं च प्रस्थाप्य गोपव्रजैरात्मव्रजं तदनु यदुकुलपुरोधसा गर्गेण वसुदेवनिदेशाद्विरचितोपनयनसंस्कारौ भास्कराधिकतेजसाव-

---

१ राजकुञ्जरो राजश्रेष्ठः श्रेष्ठहस्ती च चासौ रमारतवैरी रमायां लक्ष्म्यां रतः श्रीविष्णुस्तस्य वैरी शत्रुः रमायारतं यस्मिंस्तत् कमलसमूहः तद्वैरी तन्नाशकस्तम् । २ हरे श्रीकृष्ण हे सिंह च । ३ भार्याविनान्यस्त्रीः । ४ अवभृथस्नानम् । ५ मातापित्रोः ।

पि प्राप्तद्विजराजशोभातिशयौ सदाशयावनुपलमधिकतरं व्यरोचताम् ।

यं ब्रह्मचर्यान्निजसूत्रलब्धात्प्रागेव गोपप्रमदाप्रसङ्गात् ॥
भेजे ग्रहस्थाश्रममेष शौरिः स एव वात्स्यायनसूत्रसिद्धः २६।

अथो गुरुकुलावासमासाद्य यदुनन्दनौ ॥
वेदाङ्गगृहतुर्जातु नाभूत्तद्व्राहिताकृतिः ॥ २७ ॥

क्व हरेः श्रुतिभागेऽभून्न पदक्रमकौशलम् ॥
ख्यातिस्तथापि तस्यासीत्त्रिपदक्रममात्रतः ॥ २८ ॥

अथ चतुःषष्ट्या घटिकाभिरघटितचरित्रो वासरस्य समधिगतसकलकलाकलापो लक्ष्मीकेलिविलासो वासुदेवः समभवत् ॥

विधुरेष चतुःषष्ट्या घटीभिः सकलाः कलाः ॥
पुपोष न कदाप्यासीदासामवचयः कथम् ॥ २९ ॥

अथाधिगताखिलनिरवद्यविद्यासंप्रदायौ वरप्रदानधुरंधरौ वसुदेवकिशोरौ मञ्जुलनिजाञ्जलियुगुलमञ्जसारचय्य समञ्जसयशःप्रकाशनपरया कयाचन गुरुदक्षिणयाप्ययं जनो जनेषु कृतार्थतां नेय इति बहुतरप्रार्थनमभ्यर्थितेन तेन विप्राग्र्येण निजप्रमदानुमतमादायोदन्वदुदरनिलीननिजतनयानयनरूपगुरुदक्षिणाकाङ्क्षिणापारिकाङ्क्षिपदरक्षिणातिश्लक्ष्णया गिरा समीरितौ गुरुणा वरुणालयमरुणायतलोचनावधिगत्य तत्र च न मयापहृतो गुरुपुत्रो मा रुषं कुरु मृषा प्रभो मदन्तश्चरश्च कश्चिकदस्ति पञ्चज-

---

१ प्राप्तो द्विजराजश्चन्द्रः तच्छोभासिशयो यौ । द्विजराजः क्षत्रियराट् । २ पदक्रमकौशलं पदक्रमयोर्वेदविकृत्योः पक्षे पदक्रमः पदप्रक्षेपः ।

नाभिधानो यातुधानो न जानामि निश्चयेन तेनापहृतः स्यादिति ससम्भ्रमभयसम्पादनाय विरचितार्चनाभ्यर्थनमुदन्वन्तमनुगृह्य तन्निर्दिष्टं च तमतिदुष्टं मतिदुष्टं तदपहारिणं निश्चित्य सलीलमेव तत्क्षणे सलिलमवगाह्य प्रसह्यासह्यवेगमपि तमुपालभ्य सद्यः समालभ्य च तदुदरान्तरे गुरुसुतमनालोक्य सविस्मयलवमालापकलानुकलोयमिति तदङ्गसम्भवखण्डाखर्वनादामोदमादाय शंखमनुपलमन्वीक्ष्य दिव्यचक्षुषा संयमिनीनामकं शमनपुरमधिगत्य तत्र च तेन सभयमभयाय विरचितविविधार्हणेन ।

प्रारब्धं तावदेवास्ति देव त्वत्पदसेविनाम् ॥
प्रारब्धं नैव यावतद्धितप्रदमिदं त्वया ॥ ३० ॥

इति बहुतरकृतप्रार्थनेन च पुरस्कृतं गुरुदारकं सादरमादाय मद्भक्तेषु मैवं कुरु कदाचिदपि साहसमिति शमनमुपशिक्ष्य मङ्क्षु पुनरलक्षितगती एव सलीलं सलिलनिधिमासाद्य ततोनुपदमेव सह गुरुपुत्रेण पवित्रपथा गुरुचरणपाथोजसन्निधिमधिगम्य प्रणम्य च दक्षिणाशोपलब्धायं दक्षिणाविधौ शस्ततरो वस्तुविशेषो हस्तेनैवानुगृह्यतामिति सविनयमभ्यर्थ्य निखिलसुखनिदानं पुत्रदानं मुदा प्रशस्तचेतसस्तस्य हस्ते समर्प्य कृतसपर्ययौ पर्यायतः पर्यनुयोगत एव तस्यास्तमितसमक्लेशस्तोकहर्षं विशिष्य शिष्यमण्डलीषु निजोपयनमिव गुरुसन्निधौ गुरुसुतोपनयनमपि मनसा मन्यमानावुपविशतुः ।

---

१ 'हितकारीदृशं त्वये' ति वा पाठः । २ समीपनयनम् ।

अथ दैववशाघातमुपनीय द्विजात्मजम् ॥
आदिशद्गुरवे जन्म तद्द्वितीयमिवाभवत् ॥ ३१ ॥
शान्तं महीसुरसुतं वपुषैव तेन
भूमिस्थशं मधुरिपुर्व्यधिताद्भुतं तत् ॥
मायाश्रितो विधिमतीत्य च वर्तमानो
यद्वा न किं नु विदधातु परार्थलौल्यात् ॥३२॥
अहो विचित्रं भगवच्चरित्रं दयोदयापारसुखं प्रसन्नम् ॥
यस्मिँल्लघुत्वं सुकुमारसारं विस्तीर्णमास्ते गुरुगौरवं च ॥३३॥

अथ सप्रसादं तदाशीर्गिरा सह निजनगरगमनरूपं तदनुशासनं निजशिरसि निधाय कृतवन्दनः सबलो वसुदेवनन्दनः स्यन्दनेन स्ववियोगमन्दायमानसोल्लासं निजजनावासमासाद्य सकललोकानविकलमानन्दयामास । तदनु च दयानिधिरनुस्मृतगोपीप्रत्यादेशसंकल्पो विकल्पहीनमतिबुद्धिमन्तमुद्धवमद्धा समाहूय सखासि मम न त्वदपरः कश्चन विपश्चिदपश्चिमोस्मिन्नर्मकर्मणीति त्वयैव सम्पादनीयमेतदिति रहसि निजविरहदूनमतोगोपीजनोपदेशशैलीमुपदिश्य संदिश्य चावश्यंकरणीयमाप्तनन्दादिचरणवन्दनकुशलप्रश्नानुयोगं प्रश्रयेणानुक्तं स्वस्मिन्ननुरक्तं च मधुरावासिजननिकरं निजकरुणारसतरङ्गिणीतरङ्गपरंपराभिरतितरां संसारसुखसौभाग्यसीमापदं प्रतिपदमातनोत् ।

यदि गोकुलमुद्धवाश्रितं सकलं कार्यमनामयं तदा ॥

---

१ अदात् । २ अभूतपूर्वः । ३ उद्धवाश्रितम् उद्धवे युक्तं उद्धवेनोत्सवेन युक्तं 'महउद्धव उत्सव' इत्यमरः ।

इति भाविविवाहकामवानुचितं प्रेषयति स्म तत्र तम् ॥ ३४ ॥

अथ स समुद्भवमुद्भवोपि माधवकृतानुशासनविशेषेण कृतार्थमात्मानं मन्यमानोनन्यजनसुलक्षमवन्याभालभूतमभूतपूर्वं सुपर्वतर्वधिकपर्वदं यशोदाकिशोरकेलिशोभिततत्तत्प्रदेशमनेकशो धेनुगणचरणरेणुराजिरञ्जितान्तरालचक्रवालं गोकुलोपान्तभूतलमतिलालसेन मनसालोकयमानः शनैःशनैः सायमेव नन्दायतनमधिगत्य तदत्यादरेण प्रत्यर्पितभोजनादिनिखिलोपचारमुररीकृत्य प्रत्यापन्नधैर्यगोपवर्यमच्युताश्वासनपर्वभिरसकृदाश्वास्य कृतकौतुकं निखिलामपि शर्वरीं वासुदेवगुणनिरूपणारुणसमुदया मिथः समवधार्य यमुनावार्युपसृत्याह्नाय कृताहर्मुखकृत्यो यावन्नन्दसदनमाससाद तावदेव कृष्णमयमानसाः सहसा सह समाजेन लोकानामवलोक्य लोभनीयकायं प्रियमिव तं प्रायः प्रियेणैव निजविरहविप्रियभञ्जनाय प्रेषितो भवेदिति निश्चित्य यथोचितमुपालम्भानुपालभसंरम्भाडम्बरवागारम्भणसम्भारेणैव समभ्यर्चितं विधाय विशेषतो शेषा अपि गोपयोषितो निरतिशयशेषशायिविश्राणिताजस्रपरिश्रमापनोदनविशारदशारदराकानिशाकरसदृशोपदेशपीयूषरसं सपरितोषपोषं तन्मुखसुधाकरात्कर्णचकोरनिकरद्वारा समुपगृह्यानुपदमेव सम्पूर्य मानसं सितपक्षविहाररसिकं विधाय तदनु भगवदनुचरेण साकमनातङ्कशङ्कमपङ्ककलङ्कमाङ्कितं च विश्वनाथपदपाथोजेन गाथायूथमुपगायमानाः कृष्णपक्षे विधूता-

१ सुपर्वणां देवानां तरुः कल्पवृक्षः तदपेक्षयापि अधिकानन्ददम् 'पर्व प्रस्तावोत्सवयोर्ग्रन्थौ विषुवदादिषु दर्श प्रतिपत्संधौ च तिथिग्रन्थविशेषयोः' इतिहैमः ।

भिमानाविगलिताभिमानास्तत्तन्निजनाथकेलिसनाथविपिनावनिप्रद-र्शनेनाहर्निशममन्दानन्दसम्भृतमात्मानमिव तमपि चक्रपाणिभ-क्तचक्रचूडामणिं चक्रुः । युक्तं चैतत् ।

श्रीनाथे क्षणतोपि तत्पदजुषां मन्येधिकं वीक्षणा-
त्सौख्यं यद्व्रजभूरिहासहिसदानन्दानसेशापि सा ॥
आलोच्यैवमथोद्धवोपि समगान्हित्वेशसान्निध्यतां
घोषावासमशेषतोषदमनुध्यायन् सदानन्ददम् ॥ ३५॥
आसीत्क्लेशविनाशिनी सुखकरी गोपाङ्गनानां स्थितिः
श्रीकृष्णात्मसखोद्धवोद्धवसमुद्गीतोपदेशात्क्षमम् ॥
चित्रं गोप्युपदेशवर्तनमभूद्गुर्युद्धवानन्ददं
चित्रं च प्रजगातगा अपि सदानन्दोपदेशाश्रिताः ॥३६॥

तदनु दनुजारातिसखोपि निखिलसुखरसायनं गोपिकोपगीयमान-मनन्तानन्तचरितपीयूषमतितोषपोषं कर्णचषकेन पीयमानो निरभि-मानो बहुमानं समयमानन्देन नन्दमन्दिरेणुमितं गणयन्नगणितकृ-त्यान्तरो निरन्तरमनन्तरायं तत्रैव निवस्तुमभिलषन्नपि गोपिकेश-मिथोनिदेशवार्ताहरपरिवर्जितबहुतरावस्थितिरास्थाय रथमधिप-थगमनाय कृतमतिः स सुमतिः परिपूर्णमनोरथस्तूर्णमभ्यर्णमाग-तां व्रजवनिताजनतामतितात्विकसान्त्वमयैर्नियतप्रियप्रसादबोध-कैर्दुःखापनोदकैर्विशारदवचोभिराश्वास्य प्रसाद्य च यथोचितव-चनजातैरनवद्यहृद्येशपदभक्तिपथवर्तिनो निजसुहृद्ध्यानेन मन्दायित-सुखानतिम्लानमुखान्नन्दप्रमुखानखिलानाभीरप्राग्भारानादाय च

१ प्रियामित्रममनेन ।

श्रीशोद्देशेन तदर्पितविविधोपहारसम्भारानातिसंरम्भेण सानन्दं पुनस्तद्दर्शनामित्यच्छतरं सर्वान्पर्यायतः परिपृच्छ्य च तदाश्रयतयावासच्छायेनैव पथा मधुरामधिगम्य सङ्गम्य च निजागमनमेव चिन्तयन्तं भगवन्तं निवेदिताद्यन्तवृत्तान्तप्रकारस्तत्रातिगोप्यं गोपिकाया दानसंदेशमुपांशुतयैव निर्दिश्य प्रदर्शितस्वधन्यताचातुरीप्रसारः समासाद्य सुभगं सुप्रसन्नाद्भगवतः प्रसादं निजसदनं तदनुमोदेनैव सामोदमाससाद । स्थाने चैतत् ।

गोकुले हि तदानन्दमनुभूयाच्युतेक्षणः ॥
यः स्यात्प्रसिद्ध एवास्मिन्नच्युतप्रेमपात्रता ॥ ३७ ॥

अन्तरङ्गप्रियं गोपीरहस्योद्धवमुत्कटम् ॥
लब्धा तु यद्विसर्जेमं तन्नामानमधोक्षजः ॥ ३८ ॥

अथैकदा निजजनवृन्दावनानन्दसम्भृतो मुकुन्दः पूर्वमङ्गरागार्पणफलमस्तु त्वदुज्ज्वलाङ्गसङ्ग इत्यनङ्गसमाकुलया निजरूपन्युब्जीकृतक[१]कुब्जानिजायया कुब्जयाभ्यर्थितमनुस्मरन्सस्मितस्मेरमुखा निजसखोद्धवेन सह तदर्थितदित्सया तत्सदनमासाद्य वात्स्यायनादितन्त्रोपन्यस्तसमस्तशस्ततरविविधविलासरतिरहस्यसौरस्यसुलभीकरणेन तन्मनोजानिमिव मनोरथमपि पूरयामास । युक्तमिदम् ।

स्वतोसं[२]गी विधेयं चाप्यनङ्गाक्तं तथाप्यसौ ॥
तदङ्गरागदृष्टिः सन्नङ्गसङ्गमदाद्विभुः ॥ ३९ ॥

---

१ निजरूपेण न्युब्जीकृतो न्यूनीकृतः ककुब्जानिः ककुभो दिशो जाया यस्य 'जायाया निङ्' चन्द्रः यया एतादृक् जाया स्त्री तया ।२ स्वतः सङ्गरहितत्वादनङ्गाक्तमङ्गविरहरहितत्वं युक्तमेव पक्षे स्पष्टम् ।

अथैकदा सर्वतन्त्रस्वतन्त्रः प्रभुरक्रूरशोभमक्रूरभवनमन्तरङ्गजनावनचिकीर्षया[1] संकर्षणोद्धवाभ्यामभ्यर्हितपार्श्वभागः सहसा समासाद्य तद्विहितविविधसमर्हणामुररीकुर्वाणस्तदनुपदमेव दुर्वृत्तदुर्योधनादिनिर्मर्यादवर्तनदत्ताचित्तस्य पितृव्यपदधर्मिणो धृतराष्ट्रस्य धर्मादिषु कथंकारा वृत्तिरिति परोक्षापरोक्षलक्षितलक्षणेन समालक्ष्य समापृच्छ्य चाश्वासनपूर्वकधर्मादीनाश्वेव पुनरेहीति तमाभाष्य च हस्तिनापुरं निजमन्दिरमानन्दतुन्दिलः समाजगाम। सोपि नचिरेण तत्र गत्वा भगवदुपदिष्टेनेव पथा यथावृत्तमखिलमविकलमाकलय्याशिष्टानुशिष्टचाटूपदेशपाटवेनस्पष्टतरमुपदिष्टमपि दुष्टोपि कष्टतरफलदोपि मार्गोयं मदीयदिष्टेन[3] निर्दिष्ट इत्यसावेषाभीष्ट इति धृताग्रहं धृतराष्ट्रं सर्वथैवाक्रूरकर्मोन्मुखं[4] समीक्ष्य किमितः सन्मुखस्थितितयेति पराङ्मुखीभूय भूयसानादरेण यथाकथञ्चित्प्रष्टव्यमित्यापृच्छ्य स्वसारं स्वसारभूतभगवदनुग्रहवचसा तेन भूरितरमाश्वास्य सदाशीर्वचसा च भूयसा धर्मादीन् वर्धयित्वा तदनुपदमेव स्यन्दनेन यदुनन्दनमुपेत्य यथावृत्तमावेदयामास। तदनुभगवानपि तन्निगदितं तदुदन्तमखिलमन्तःकरणेनावधार्य का चिन्तेति नितान्तमुच्चैर्वाचमुच्चार्य विश्वविस्मापनीयाकृतिरपि शश्वत्सस्मयस्मेरमुखः स्वसन्मुखमुपाधितिष्ठन्तमक्रूरमक्रूरवाचा निजगृहमुपगन्तुं प्रस्थाप्य नयविन्मान्योपि विनयविन्यासेनैवास्थविरमाबालं च निखिलनगरवासिनो जनान्नानाविधवैभववितरणैरानन्दयञ्छ्रीगोविन्दः सबलः प्रागनुभुक्तबहुदेवनौ[5] देवकीवसुदेवाभि-

१ गृहस्थितजनरक्षणकरणेच्छया। २ अर्हणां पूजाम्। ३ मदीयदैवेन। ४ क्रूरकर्मकरणे उत्सुकमित्यर्थः। ५ देवनं दुःखम्।

धानौनिजपितरावपि निरवधिसुखनिकरसौभाग्यसुलभीकरणेन निरन्तरायमहर्निशमधिकमधिकमानन्दयामास। मोदभरानुभवभागधेयौ विधाय बहुधावनिबुधावनधर्मकर्मनिष्ठमखिलज्येष्ठतया मातामहमपि पितामहपदावहमहर्निशमनेकराजकरानिकराञ्चितत्वेन कुमुदाधिकशोभिनमुग्रसेनमनायासेन निरामयराजराजपदभाजनं विधाय च स्वयं सभाजनस्तुतास्तोकयशस्तोमचन्द्रो निस्तन्द्रमुद्रं दयासमुद्रः स्वजनभद्रं चिन्तयन्नरीरमत् । अथ कदाचिद्विदलिताखिलमाङ्गल्यसारैरुग्रसेनसुतदारैरुद्बोधितो जरासन्धाभिधानो मगधाधिपतिरकस्मादेव निजवरूथिनीभिरभितो मथुरानगरवरणमरुणलोचनोन्यरुणत । तत्र च ।

द्वारं पूर्वमुपारुधन् क्षितिभृतः शाल्वादयो दक्षिणं
विन्दाद्या अपि पश्चिमं हुणमुखाः शिष्टं शकुन्यादयः ॥
कल्पान्तोद्यतखण्डखण्डपरशुप्रोद्दामढकाध्वनि-
भ्राजड्डिण्डिमडम्बरेण निबिडं ब्रह्माण्डभाण्डं व्यधुः॥ ४१॥

तदनु सपदि पदातिनिवेद्यमानताद्दगुदन्तौ नितरामन्तरेण तदन्तावनुपदं च यदुकदनं मनागप्यसहमानौ सहसा विहायसः समासादितस्यन्दनौ यदुनन्दनौ दुर्जनमर्दिनौ संकर्षणजनार्दनौ धृतवर्माणौ भूत्वा नगरधरणिरक्षणाय मङ्क्षुतरमक्षुण्णसत्यरणदीक्षान्त्सात्यकिप्रमुखानखर्ववीरवर्गानादिश्य स्वयं समधिगतविविधायुधावायोधनाय तदुत्तरमुत्तरद्वारेण सरयं निरयाताम् ।

दध्मौ शङ्खमखण्डनादमहिपैः श्रीशश्च तेन द्विषां
सेनामाकुलयन्क्षणाद्विघटयन् सङ्कम्पयन् घूर्णयन् ॥

---

१ अभितो मथुरानगरम् मथुरा नगरस्यासमन्तात् 'अभितः परितः—'इत्यादिना द्वितीया । २ शेषावतारो बलिरामः ।

निर्विण्णः शतधा निशम्य मगधाधीशस्य हृत्कन्दरा-
च्चित्रं धैर्यहरिस्ततो निरगमन्नालोकयन्पृष्ठतः ॥ ४२ ॥

तदनु न चिरादेव रुचिरतरं समपद्यतानवद्यशौर्यविद्याविशारदवीरधुरंधरशोभनीययशोधनमायोधनम् ।

स्थाने वैरिविदारणाय यदभूदायोधनं शार्ङ्गिण-
स्तन्मित्राङ्गविदारणाय[1] च पुनश्चित्रं तथा लक्ष्यते ॥
संवर्षी प्रतिपद्यतामुपयमं[2] तेनारिभूभृद्गणः
पश्यन् दिव्यवधूगणौघ्युपयमं[3] तेनेति चित्रान्तरम् ॥४३॥
युद्धे तत्र समुद्धतो यदुपतिः कालाग्निरुद्राकृति-
स्तेनेज्याविरहं तदन्वसुपदधन्विष्वरातिष्वपि ॥
वंशं केवलमच्छिदन्न धनुषः क्षुद्रक्षितीशामपि
स्वं चक्रं परमग्रहीन्न कुपितो देवेश्वराणामपि ॥ ४४ ॥
भानुं खण्डितमारचय्य विविधैरायोधनैर्मायिना
तेजोभानुरखण्डितो विरचितः स्वस्यैव कंसारिणा ॥
स्वस्यावर्धत राजमण्डलमिदं छित्त्वा यशश्चन्द्रमा
इत्थं स्वार्थपरः कथं स जगतां हेतुर्हिते गीयते ॥ ४५ ॥

तदनु कुचोद्यालापौ चैद्यमगधाधिपौ सकोपमभिधावमानं पापिजनदुष्प्राप्यावधानमप्यधोक्षजमञ्जसा कलयितुमाकाङ्क्षन्तौ रुषामृषारुणाक्षौ रूक्षाशरलक्षितं तरक्षुप्रकृतीप्रथनं प्रचक्रतुः ।

---

१ मित्राङ्गविदारणाय मित्राणां अङ्गाणां विगतं दारणं दुःखं तस्मै कारणाय । २ उपयमं यमसमीपम् । ३ उपयमं विवाहः ।

किं राजसिंहस्य ममाग्रतोपि हरे तवैतत्समरं चकास्तु ॥
किं माक्षिकाभ्यः किमु बालहस्तसंचालनं स्वावयवावनाय ४६

एवमतिजल्पन्तं सपरिवादवीरवादमतिमूढमेनं भगवानपि विषविषमभाषणं प्रत्यभाषत ।

निर्भिन्नं शतशः शितैस्तव वपुर्बाणैर्यदीयैः पुनः
संधास्यत्यचिराज्जरेति कुमते मैनां दुराशां कथाः ॥
नौ कौमार्येपि पालनं तव परा शक्तिर्विधातुं क्षमाः
प्राणास्ते तृणतूलपर्णसदृशाः स्युः कृष्णवर्त्माश्रयात् ॥४७॥

एवमन्योन्यमभिदधानौ मधुसूदनावनालक्षितमगधनाराचनिचयसंधानमोक्षमन्योन्यजयाकाङ्क्षमचक्षुर्लक्ष्यमसदृक्षं क्षत्रकुलसमक्षमध्यक्षीकृतरूक्षेतरभुजकौशलं कलहलीसनलतापसेनाप्यननुभूतपूर्वमतिविस्मितसुरासुरनिकरं समरमारचयन्तावन्तरा हलधरेण विरथीकृत्य हननकर्मीकृतोपि कार्यविशेषचिकीर्षया सङ्कर्षणानुजेनाधोक्षजेन जीवन्मुक्तिदशां प्रापितोवनमितमुखो निजनगमेत्य पुनरपि निस्त्रपः समराय कृतमतिरित्येवं सप्तदशवारमपि रणपराजयमेवानुभूय भूयोपि किञ्चिच्चिकीर्षुर्यावदासीत्तावदेवं देवर्षिणा धरणिसुरपीडकोयमपि मधुसूदनकरतोऽनिषूदनीय इति चिरमन्तरे विचिन्त्य सत्यातुलबलस्त्वं सबल इति शब्दं वृष्णिकुलदीपके कृष्णे कथं सहसे इति बहिर्वञ्चनावचनेन समुत्तेजितोतिजवनो यवनो मधुरामुपगम्य मधुसूदनमाहवाय समाह्वयत् ।

---

१ अग्नेराश्रयणेन पक्षे कृष्णमार्गानुसरणेन । २ जीवन्नपि मुक्तस्तद्दशाम् ।

यदुपतिरपि पुनरेष्यमाणो चिरेण मगधाधिपतिरागतश्च यवन इति विदितोदन्तो निरान्तकमना अपि गृहीतलोकानुसरणिरुपस्थितमतिविषममेतदिति संमन्त्र्य मन्त्रिभिः स्वजनगोपनाय तूर्णमध्यर्णवं विश्वकर्मणा दर्शिताशेषशिल्पकौशलं द्वादशयोजनायामं द्वारकाभिधानं पुरमतिरुचिरं निर्माय तत्र जलदुर्गे निजयोगबलेन स्वजनानवस्थाप्य स्वयं च सह रामेण मधुरानगरान्निष्क्रम्यागतं तमेनमतिमदं नारदोदितरूपाभिधेयसंवादादरविन्दनाभोसाविवेति विदितात्मा समवधार्य पृष्ठतोतिनिष्ठुरमनुधावमानमाचिन्त्यशक्तिरवलम्बितवञ्चनाप्रपञ्चमात्मानमुपकण्ठं दर्शंदर्शं दीर्घदर्शी चपल इव पलायमानो नीचतरधियमनयवेदिनमनयदवनिधरकन्दरान्तरमन्तर्धाच्च । स च दुर्मनीषस्तत्रातिरोषेण दुर्मर्षणो गिरिकन्दरान्तराले मान्धातृतनयमैक्ष्वाकमसुरसंगरसंगतपरिश्रमापनयनाय त्रिदशाधीशनिदेशतः शयालुं भवतु भवन्निद्राभङ्गहेतुर्भस्मसादिति तत्समासादितवरं राजर्षिवरं मुचकुन्दाभिधानं मुकुन्दभ्रमेण ससंभ्रममतिदारुणचरणतलेनावहत्य यावदवलोकनकुतुकी बभूव तावदेव तत्पादघातसमुपजातजागरः सोपि स्पष्टमष्टस्वपि दिक्षु चक्षुर्निक्षिपन्नधिक्षिपन् दृष्टिपातेनैव पुरोवर्तिनमेनं मूर्तिमत्स्मयरूपं भस्मसाद्विधाय विस्मयाविष्टमनाः किमिदमस्थाने समुपस्थितमिति अन्तरे नितान्तमनुचिन्तयन्पश्चाद्[2] द्विपश्रिदग्रणीः पश्चाद्[3] दुपविष्टमष्टदिगधीशविशिष्टतेजःसमभीष्टदेक्षणमक्षीणमहिमानमक्षोभ्यलक्षणमधोक्षजमद्राक्षीद्रागेव परीक्ष्य च श्रीवत्साद्यसाधारणभद्रमुद्रामुद्रितोरःस्थलतया पुराणपुरुषोत्तमोऽयमेवेति अतितोषादस्तौषीच्च । तथाहि ।

---

१ दर्शयन्दर्शयन् । २ पश्चादनन्तरम् ।३ पश्चादुपविष्टं पश्चाद्भागे स्थितम् ।

गुणानारोप्यं त्वय्यनिशमसतस्तोतृषु कृपा
न लोकेन्यन्मत्तः परमिति च ते स्वस्तुतिरपि ॥
वचः सर्वं मिथ्या तव भवति दूरं परिचया-
द्यशोराशिश्चित्रं तदपि निरहङ्कार इति ते ॥ ४८ ॥
इयं त्वामाक्रम्य प्रथयतु भिदा बुद्धिमसतीं
सजातीयाञ्जीवान् रचयतु भवद्वेश्मविमुखान् ॥
भवानास्ते नोपि त्वयि विशयमुत्पातयतियं-
त्रियामायास्माकं तमपहरलाभोयंममितः ॥ ४९ ॥
वद्ध्वा सुष्टु गुणैस्त्रिभिस्तनुभृतः पश्चान्मिलद्वेदना-
जालात्पालय पाहि मामिति मुहुर्मुक्तालयाक्रोशतः ॥
मुक्ताञ्जीवत एव तान्वितनुषे लाभः स एवामुतो
यद्दुर्गे पुनरेव पातयसि तानन्ते न शोकाय तत् ॥ ५० ॥
कल्याणं त्वमनन्तमात्मवशयन्केशाननारोदरा-
न्यश्चापातमनोरमान् विभजतो जीवान् यतो मोहयन् ॥
तत्ते मायिनमाकलय्य सुचिरं त्वामैक्यकामाः पुनः
खिद्यन्तेनशनादिभिः श्रुतिहितैर्न्यायैश्च केयं कला॥५१॥
सन्तस्त्वां हृदये त्रिविक्रम इति ज्ञात्वापि किं कुर्वते
यद्भावोत्तमविद्यया किमु हितं विस्मारितः स्वात्मना ॥
प्रागाक्रम्यहृदैव तत्र स्व वशे सर्वं तदात्मानम-
प्यात्मन्येव निपात्य तेषु यदहो नामाकृतिं लुम्पसि॥५२॥

---

१ गुणैः सत्त्वरजस्तमोभिः रज्जुभिश्च ।२ दुर्गे गन्तुमशक्ये मोक्षे पर्वतादौ च

अपाणिर्गृह्णासि त्वरितमपदो धावसि विष्व-
क्प्रपश्यस्यश्रोत्रः श्रवणपटुरालोचनपरः ॥
तव प्राचः प्रत्यग्दगिति कथमेतत्किमथ वा
भ्रमन्ति ब्रह्माद्या अपि न विदितास्तत्त्वपदवीम् ॥ ९२ ॥

एवमस्तोकमधुरतरतारगीर्भिरभिसंस्तुत्य प्रश्नोत्तराकलितसकलभगवत्तत्त्वोदन्तः शान्तमनाः सनातनगुरुरयमेवेति निर्णीय गीर्वाणवृन्दवन्द्यमानचरणारविन्दमभिवन्द्य मुकुन्दं मुचकुन्दो निन्दितयाचनाभावोप्यवाप्तवरप्रसादो विभाव्य च ह्रदातिह्रस्वकायमानमानवाद्यवलोकनेन चरमेयुगारम्भसम्भवमंहःसद्यःसंहरणैकपरायणनारायणचरणपरिचरणानुसरणाखिलसञ्चितमलक्षपणाय तदाश्रमाश्रिताश्रियं दिशमुदीचीमभिप्रतस्थे । भगवानप्युक्तयुक्त्या तमधमतमं यवनाधिपमुपशममुपनीय सपदि मधुरां पुनरासाद्य तद्यवनानुचरानवद्याचाराननच्छप्रकृतीनातितुच्छान्म्लेच्छसंघानुच्छिद्य तदीयां सम्पदं निखिलमथुरानगरगतां च सद्य एव द्वारकायाममिप्रेषयन् यावदध्यतिष्ठत्तावन्मगधमतिसंरम्भेण निजनिरोधाय प्रयतमानं नगरप्राकारमुपरुन्धतमाभाव्य तदविश्रान्तविश्राणितविविधायोधनविधिरपि माधवो भाविसंविधानविधिविधित्सया स्वयं सदैवापराजितोपि तदानीं पराजयपदमभीष्टं मन्यमानः सह बलेन चपलपवमानवेगं पलायमानः पलमात्रेणैव विदूरवर्तिनं प्रवर्षणाभिधानगिरिशिखरमारुह्य क्षणमात्रं तत्रालक्षितगतिर्वृक्षमूले वा समक-

१ कलियुगारम्भसम्भवम् । २ बदरिकाश्रमयुक्ताम् । ३ पापाचरणकर्तॄन् । ४ कलुषप्रकृतिकान् । ५ विधातुं कर्तुमिच्छा विधित्सा ।

रूपयत् । स च दुरध्वा मगधः कदध्वानुधावनपरिश्रमश्रान्तानि-खिलप्रतीकोपि प्रातीतिकगिरिशिखरमारुह्य कृतविविधतच्छोधनो-पि घनाघनिधिर्घनश्यामसुन्दरेन्दिरेशदर्शनमलभमानः शलभमान-मेनं करिष्यामीति मृषा संकल्पजालाकुलमानसस्ततोवरुह्य प्रसह्य सकलमपि तमचलमनलज्वालाकलापाकलितमलमचकलत् । तद-नु तदानीमेवाद्भुतरसनीरधिर्नीरदाभो मुकुन्दः सह बलेन बलादुल्लुत्य तदनालक्षितगतिरेव सह साहसेन दशयोजनसमुन्नतादपि गिरेरधः सर्वंसहामवतीर्यानुपदमेव द्वारकापुरीमगमत् ।

आयातां द्वारकामेतावतिसन्धाय मागधम् ॥
सोपि दुष्टः पुरीं प्रायान्मुग्धो दग्धाविमाविति ॥ ९४ ॥

तामेतु सन्मार्गगतः सुकन्यकां न रौहिणेयो विधिचोदनात्कथम् ॥
सचित्रमत्रैव निवेशिताशयश्चचाल नोत्तुङ्गगृहात्प्रहर्षतः ॥ ९५ ॥

भीष्मस्य बालाथ गुणैकलोला विधोः करेण ग्रहणं समैच्छत् ॥
मौग्ध्याद्दुरापस्य समुन्नतस्य न तस्य वीप्सापि हर्षाय तस्याः ९६॥

विधुरप्यथ राजकन्यकावशकामाविलमोहितो हि ताम् ॥
स घटेत न वेति संशयं विधिमुल्लङ्घ्य चरन् करोतु किम् ॥ ९७॥

एवं परस्परगुणगणाकर्णननिर्णीतसवर्णयो रुक्मिणविनमालिनोः प्रतिकूलचारिणो रुक्मिणः शिशुपालगताशयस्याशयविशदीभा-वाय विगतान्यभावा रुक्मिणी तदानीमेव कमपि परमाप्तमात्म-

---

१ दुष्टमार्गानुसारी । २ कदध्वा कापथः । ३ अतिपापसमुद्रः । ४ सर्व-सहां पृथ्वीम् । ५ सुकन्यकां कन्याराशिम् सुष्ठु कन्यकताम् । ६ रौहिणेयो बुध बलरामश्च । ७ उत्तुङ्गगृहं उच्चैर्गृहम् पक्षे सममेव । ८ मोघा नेत्यर्थः ।

संदेशहरणचणमग्रजन्मानमनुकल्प्य मधुसूदनं प्राहिणोत् । तदनु सोप्यनुपदमेव यदुनन्दनमधिगम्य लब्धविविधाभ्यर्हणो रुक्मिणीक्लेशनिर्वहणकामस्तत्संदेशानर्घ्यमणिमालालंकृतवक्षसं तमधोक्षजमञ्जसा द्विजराजश्चकार ।

श्रुत्वैव संदेशमथ प्रियायाः शौरिर्द्विजाद्धाविनमन्वभूत्प्राक् ॥
सर्वस्वमुद्वाहमहोत्सवस्य निरीक्षणं किंत्ववशिष्टमस्याः ॥ ५८॥

तदनुपदमेव तेन संदेशहरेण सह महीसुरेण सुरमणिरमणीरमणीयतरकामिनीलाभनिरवधिकानन्दतुन्दिलो यदुनन्दनो मन्दीकृतविनतानन्दनामन्दगतिकैः सुग्रीवादिभिश्चतुर्भिर्घोटकैः संदानितं स्यन्दनं समारुह्य समूह्य च विवाहर्क्षमतिमङ्क्षुसन्निहितमेकेनैव दिवसेन विवाहोत्सवमण्डपाद्यनेकस्वास्तिकमण्डलमाण्डितमखण्डशोभकुण्डिननगरमगमत् । रामोपि निजमनुजमेकाकिनमेव समुद्वाहोत्कण्ठया गतमित्यालोच्य दुर्दान्तदमघोषमगधाद्यरिवर्गमखर्वगर्वं च विभाव्य तत्साहाय्यकामस्तदनुपदमेव सह महता बलेन कृष्णविरहासहिष्णुरिव कृष्णसविधभुवमधिजगाम ।

अत्रान्तरे सोत्कालिकेपि शौरौ विलोक्य वैलम्ब्यमखिद्यतैषा ॥
स्वतो विधावस्त्वनुकूलः(भावः)स ब्रह्मणा केन विनावगम्यः५९॥

अथ रथादवतीर्य द्विजवरोपि परिगृहीतमुरशासनानुशासनः सत्वरमागत्य सिद्धं त्वदभीष्टं समागतस्त्वनवद्यसंदेशपथजातनिशामनसमसमयसमुद्भूततावकावलोकनोत्कण्ठोऽकुण्ठप्रभावो वैकुण्ठावतारी सकलनरकण्ठीरवो भगवान्वसुदेवसूनुः सहाग्रजेन समग्रबलेन

१ ब्राह्मणम् । २ सोत्कण्ठे ।

च ग्रामोपशल्यमशल्यं कुरु मानसमिति निवेदयितुकामं तन्निवासागारमवजगाहे ।

आलोकमात्राद्द्विजराज एनामानन्दयद्राजसुतां ततोस्याः ॥
कृत्स्ना सवित्रा ऋजुभङ्गकृत्या तत्रास नो मन्दतनूजभाजः॥६०॥

सुदृशो द्विजतः श्रुत्वा हरेरापादधीरभूत् ॥
तेनैव परमानन्दं भेजे साक्षात्कृतेरिव ॥ ६१ ॥

अथ विदर्भाधिपतिर्वार्ताहरमुखतः स्वसुखतोषेण वसुदेवसूनु निजदुहितुरुद्वाहमहोत्सवविलोकनलालसया समासेदिवांसाववधारयन्सहामात्यैः प्रत्युद्गम्य विधिबोधितविविधोपचारैराराधनं विधाय निरवद्ये नगरबाह्योद्याने एवानल्पकल्पिताकल्पमण्डपे तन्निवासमकल्पमत् । तदर्वागेवाखर्वबलैः शाल्वजरासन्धादिराजसमाजैर्विराजमानमागतं चेदिराजं परिपूज्य तत्तनूजमपि कल्पितजामातृपदशोभमनेकशो विधिविधानैर्यथार्हमभ्यर्च्य नगरमन्तरा निरन्तरायकार्यसिद्धप्रसिद्धमहदुन्नतालयमलमकल्पयत् ।

दमघोषविदर्भेशौ ततो निजतनूजयोः ॥
अङ्गमङ्गलकर्माणि स्वैरचीकरतां द्विजैः ॥ ६२ ॥

आश्चर्यमेतत् ।

न चेदिभर्तुः श्रुतिमन्त्रजापि शुभोत्तरा कौतुकधारणाभूत् ॥
द्विजन्मना लौकिकमन्त्रतोपि सिद्धाऽभवत्सैव शिवाय शौरेः ६३॥

तदनन्तरमनर्गलमङ्गलतूर्यस्वनमुखरितेषु निखिलहरिन्मुखेषु दुर्वारमदनपरिवारवारवर्वर्णिनीगलसमुज्ज्वलविगलदुन्मदकलगीतवा-

१ निर्भयम् ।

चालितेषु सकलनगराजिर[1]चक्रवालेषु गृहीतनानाविधोपहारमनोहारिणीषु विपणिषु समीरितकुतुकलौकिकमङ्गलशब्देषु सकललोककलापेषु वर्षवरप्रायपुरुषशतपरिवृतापि समधिगतविविधायुधयोधयूथवलयिता शचीव हरि[2]परायणा स्वाहेव कृष्णवर्त्म[3]दत्तचित्ता संयमनीव जीवितेशमयहृदया तामसी[4]व निरन्तराशाश्रितपुण्यजनैकलभ्या भार्गवी[5]व भुवनाधिपैकलालनीया सदागतिरिव प्रियस्पर्शाभिलाषिणी सर्वसंपदिव मनुष्य[6]धर्मानुवर्तिनी पार्वतीव वृषाकपिप्रणयिनी भारतीव विध्यनुकूलकामा छायेव पद्मोल्लासकराभिलाषिणी रोहिणीव विधुसंगानुसारिणी तारेव कमनीयभिषणा देवसेनेव कौमारविभ्रमविकाशिनी रतिरिव कन्दर्पसञ्जीवना द्रुपदात्मजेव धर्मानुरक्ता सुभद्रेवापार्थ[7]कामवर्जिता चित्राङ्ग[8]देव प्रियविजयकाङ्क्षिणी इलेव[9] बुधश्लाघनीया सतीव तातानभिमतपतिकामुका मूर्तमती पातिव्रत्यगतिरामणीयकेन मुक्ताहारानुरक्ततया च हंसगामिनी हरिसमीपजिगयिषयातिसूक्ष्ममध्यभागतया च नरसिंहप्रियाधृतहारिद्रवसनतया माधवानुरक्ततया च पीताम्बरप्रणयिनी सत्यकामतया हरिवाञ्छया मञ्जीरमञ्जुसिञ्जितानुरञ्जिततया जलजविजिगीषुकरतया च गजपदमिव निजपदयुगल-

---

१ आजिर मङ्गणम् । चक्रवालं मण्डलम् । २ 'यमानिलेन्द्रचन्द्रार्कविष्णुसिंहाशुवाजिषु । शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु' । ३ अग्निदत्तचित्ता पक्षे कृष्णस्य वर्त्म मार्गः तत्र दत्तचित्ता । ४ रात्रीः । ५ लक्ष्मीः । ६ मनुष्यधर्मा कुबेरः पक्षे मनुष्यधर्ममनुवर्तते इति । ७ पार्थमर्जुनं विना पक्षे अपार्थं व्यर्थम् । ८ चित्रवाहनराजकन्या अर्जुन स्त्री । ९ वैवस्वतकन्या ।

मधिवसुंधरमपर्यन्ती तपःप्रभावसंभूतजङ्गमभावामिव रम्भास्तम्भयुगुलमूरुयुगुलमाकलयन्ती काञ्चीपदतया तपःसिद्धिक्षेत्रमिव मदनस्य नितम्बबिम्बमवलम्बमाना तदङ्गनिर्माणसपर्याकृतलम्बोदरानादरेणेव विधिना विस्मृतमवलग्नं बिभ्राणा हृदयेशयस्य अङ्गजमतङ्गजस्य जगतीधरविलङ्घयिषया पुरःप्रसारितमुखस्य कुम्भानुकारिणा कुचयुगुलेन शुण्डादण्डानुकारया च रोमरेखया शोभमाना वदनेन्दुशुश्रूषया समुपागतया नक्षत्रमालयेव नक्षत्रमालया बलयितगलप्रदेशा तिरस्कृतचन्द्रकान्तमपि वस्तुतः सुधांशुसोदरमिति दुष्कीर्तिनिवर्तनाय कृतजन्मान्तरेण वदनारविन्देन लोभनीया प्रथमं मधुमात्रवैरिणा ततः समुज्झितमधुरेण मधुरिपुणापि स्पृहणीयमाधुरीधुरीणमधुरं बिभ्राणा बिम्बाधरमाधुरीसमभ्यसनाय मुखसुधाकरोदितेन सुधाबिन्दुनेव नासामौक्तिकेनालंकृता परिपूर्णवदनसौन्दर्यसागरसेतुनेव नासिकया विराजमाना मधुपसुन्दरतया श्रुतिविलङ्घननिर्विशङ्केन नयनयुगुलेनालंकृता किन्नरेशप्रतारणेन मुकुन्दाभिधदशमकल्याणनिधिविलोकनानुकूलं सिद्धाञ्जनमिव मृगमदतिलकमलिकतले[1] बिभ्राणा अनुभूतसीमन्तकर्मश्रुतियुवतिगर्भकुलहीराविर्भूतबालजालमिव वालजालं[2] शिरसा श्लाघयमाना विद्युदिव प्रावृषेण्यं कमपि कमनीयममृतमुचमनुवर्तमाना तारकेव विष्णुपदलोला[3] चन्द्रिकेव कुवलयामोदिनी वासरलक्ष्मीरिव राजमण्डलमलिनीकरणोत्सुका दीपशिखेवानन्त-

१ भालदेशे। २ केशसमुदायम्। ३ विष्णुपदमाकाशम् 'वियद्विष्णुपदं वापी' त्यमरः। पक्षे विष्णोः श्रीकृष्णस्य पदम्।

स्नेहनिक्षेपयोग्या कल्पलतेव जगदादरणीयपल्लवानुरक्ता कामधुगेव गोविन्दाधीनजीवना चिन्तामणिरिवाभीष्टस्पर्शनबद्धादरा अमृतकलशीवावश्यंभाविविष्णुरथविहारिणी सिद्धरसलहरीव जातरूपानुरूपलालसा धन्यजनैकलभ्या दिव्यौषधिरिव सकलाङ्गजरुजापहारिस्पर्शा कुमुदिनीव कोशोल्लासमातन्वती शतमखमखमेखलेव कल्याणसम्बन्धा मणिमञ्जरीवालम्बितगुणगणा रत्नमालेवान्तरानिवेशितनायकरत्ना तिथिरिव हरियोगानुकूला करुणेव परसुखावहा क्षमेव पुरुषोत्तमनिर्धारणहेतुभूता श्रद्धेव पुरुषोत्तमकृतसकलेष्टिसाफल्यसम्पादिका मुक्तिरिव विबुधस्पृहणीया तीर्थयात्रेव शिशुपालदुरवापा सुरभिरिव गदाधरभीरुभावोचिता भागीरथीव जगतीपतितपोलभ्या यमुनेव कृष्णगुणोल्लासिनी सरस्वतीव विश्वम्भरान्तर्गतजीवना कवेरजेव चोलदेशमधुरतरा सरयूरिव हंसावासमानसप्रवृत्तसर्वतोमुखा विरजेव वैकुण्ठसमीपगामिनी तुङ्गभद्रेव सर्वतोमुखाटोपा तापीव सूर्याश्रिताभ्युदया गोदेवाक्षिपादानन्दविधायिनी कुसुममञ्जरीवालिकदम्बकरम्बिता कीर्तिरिव शुचिस्वरूपा शचीव सहस्राक्षमनोहारिणी वारुणीवाशेषभूभृत्तिरस्कारिणी सीतेव रामानुगामिनी सुकृतपरम्परेव हरिप्रीतिजनका भगवती भीष्मकतनया स्वयं सर्वमङ्गलेडितापि सर्वमङ्गलागमेशमाप्तुकामा सर्वमङ्गलामुपासितुमन्तःपुरतः पुरतो निर्गत्य पदगत्यनुरोधेन भवानीभवनमभजत्। कृताभ्यर्चनामभ्य-

१ सुवर्णोल्लासं कलिकोल्लासं च। २ हरिवासरः तस्य योगः हरिः परमेश्वरः। ३ शिशुं पालयति ते संसारिण इत्यर्थः शिशुपालश्चैद्यस्तेन प्राप्तुमशक्या। ४ अक्षिपादो नाम कश्चिदृषिः पक्षे स्पष्टम्।

र्थिताभीष्टां च तामिष्टदेवतामस्पष्टभावादष्टाऽङ्गतोनिष्टनिवृत्त्यै-प्रणिपत्य निर्गत्य च सह सखीजनेन प्रासादतः सहसा सह साहसेन प्रदक्षिणादाक्षिण्यं पुरस्कृत्य तिरस्कृत्य च निजाप्तवर्गं निसर्गतोक्षिकटाक्षेण पुण्डरीकाक्षमभिलक्ष्य देवमायेवाघटितघटनापटीयसी सकलमपि राजवृन्दं पूर्वपक्षाकलितमित्यनालोकपात्रतापादनेन स्वल्पीकुर्वाणा सकलाद्यकृष्णपक्षाश्रितं च राजमण्डलमखण्डसिद्धान्तमिवाभिवर्धयन्ती समुद्राधिकशोभा द्रागेव द्रुततराङ्घ्रिविक्षेपमन्दाक्षविकासापि समन्दाक्षमेव मन्दाक्षतत्स्यन्दनाभिमुखमगाधसुखविषाददोलाविषमितहृदया सभयमेवमयासीत् ।

राजमण्डलमासन्नं त्यक्त्वा चक्रैकमासुरम् ॥
सवितुर्[1]प्रेमपात्रं सा पद्मा तत्स्यन्दनं ययौ ॥ ६४ ॥

प्रेयसीहरणादन्यदनिच्छन्हरणं हरिः ॥
चचाल चपलं हृष्टः पश्यतां सर्वभूभुजाम् ॥ ६५ ॥

अथ जरासन्धप्रभृतयोखिलभूभृतो निभृशं कृशेतराभिमानबुद्धयो युद्धाय बद्धादराः श्रद्धालवः शिशुपाल एवारिदरकरमपि मधुसूदनं धेनुपालमिति बालभावेन स्थूलदृष्टयो मन्वानास्तदनुपदमनुधाव्य विधाय च विविधमायोधनजातमुपजातपराजयाः सर्व एव भग्नरथाः शिथिलमनोरथाश्च प्रत्यावृत्य त्रिदिवपरिभ्रष्टमिव नहुषं पुरुहूतपातितमिव त्रिशङ्कुं प्रमादगलितविद्यामिव विपश्चितं पश्यतोहरपरिमुषितरत्नमिव नष्टस्वरूपशोभमाशोपल-

---

१ पितृप्रेमपात्रम् । पक्षे सविता सूर्यः २ 'वारिदरूपश्यद्धयो युक्तिदण्डहरेषु' इत्यलुक् ।

व्यदिष्टापगतेष्टश्रियमिव राजानमविराजमानं सभायामतिदूरमानसं तरसा शिशुपालमाश्वास्य तेनाश्वारूढेन मूढमातिना सहैव संरूढविषादाः स्वभवनमाश्वेवमभजन् । ततः ।

हरिमायोधने हत्वा गृह्णन्नायामि सोदरीम् ॥
इति सन्धा कृतान्धेन हितवर्त्मनि रुक्मिणा ॥ ६६ ॥

एवमज्ञाग्रणी राज्ञामग्रतः प्रतिज्ञाय सक्रोधमज्ञातभगवत्पराक्रमः संक्रान्तो विक्रान्तिमदक्षोहिणीसेनया विनयांशाविवर्जितस्तर्जयञ्जनार्दनमधावत् ॥

स्वसारमादाय गतः स रुक्मिणः
पुनः प्रयच्छेत्किमु पश्यतोहरः ॥
स्ववृ(त्त)येथापि स कृष्णवर्त्मभाक्
तथाविधः क्वापि विलोकितः श्रुतः ॥ ६७ ॥

तदनु धनुष्पाणिरकरुणो रुक्मिणीरमणोपान्तधरणिभागमधिगत्य कथं निजभुजस्वसारमनालोचयन्नेव मम स्वसारमपहरसीत्यसारां गिरमुद्गीर्य शरजालमनल्पमल्पधीरवाकिरदवादीच्च ।

आयान्ति कर्कशमुखा न पुनः स्वसार-
मप्राप्य जीवति हि रुक्मिणिमार्गणौघाः ॥
क्रूरस्वभावमवजित्य च गाढमुष्टिः
प्रत्यागतः स्वपरिपालनधीः खलेशः ॥ ६८ ॥
तत्कालमादितगताहिभयो न चन्द्र-
हासं हरिः परमनुष्ययशोपि तादृक् ॥

---

१ मदयिभुजबलमित्यर्थः । २ कृपणः

सिक्तानि नो रिपुवपूंषि परं तदस्त्रौ
स्वर्गाङ्गनातनुलता अपि सत्त्वजैस्तैः ॥ ६९ ॥

एवं निहतवाहिनीवाहनमुपजातपराभवमरुन्तुदभाषिणं रुक्मिणं हन्तुं धृतकृपाणे चक्रपाणौ रुक्मिणी बन्धुर्जीवा[1]धरापि बन्धुजीवसंधारणमतिकरुणभाषणपीयूषवर्षादकार्षीत् । चित्रमेतत् ।

प्रेयसीदीनवचनसुधारसमधाद्धरिः ॥
रुक्मिणस्तदभूच्चित्रं मरणाभावकारणम् ॥७०॥

ततः स्वकार्यपर्याप्तिदर्शी वासुदेवो रमणीरमणीयवाणीमाकर्ण्य त्यक्तनिर्घृण[2]भावः कौतुकेनाकेशसंचयपङ्क्तिमेनमपत्रपं विधाय शताङ्ग[3]संगतं गुण[4]जालेन क्षणमात्रमकरोत् । स्थाने हि तत् ।

क्षमं तस्य धनुर्वेदाभ्यासवर्णि[5]त्विमास यत् ॥
समावर्त[6]नमस्याङ्गं चिकुर[7]श्मश्रुमुण्डनम् ॥ ७१ ॥

यावदेवं तावदेव बलदेवोपि परराजचक्रमाक्रम्य वृष्णिचक्रेण सह कृष्णमचक्रिसन्निहितस्तत्रैवंविधानुभवमनुगृह्यमाणं रुक्मिणमवनतमौलिमवलोक्य लौकिककौतुकोक्तिभिः कृष्णं निर्भर्त्स्य निर्भरं समाश्वास्य च सहोदरापमानमसहमानामतिम्लानाननामतिकृपणवाणीं रुक्मिणीं तदानीमेव तादृशबन्धनान्मोचयित्वा ससत्कारं प्रेषयित्वा रुक्मिणीकृष्णाभ्यां साकमनेकयदुवीरवर्गै-

---

१ बन्धुजीवं न धरतीति विरोधः । बन्धुजीवं नामारक्तपुष्पमिवाधरो यस्या इति परिहारः । २ त्यक्तो निर्घृणभावः कठोरत्वं येनैतादृशः । ३ शताङ्गसङ्गतं रथे बद्धं रथयुक्तं च । ४ गुणजालेन रज्जुभिः दयादिगुणैश्च । ५ वर्णित्वं ब्रह्मचारित्वम् । ६ समावर्तनमाश्रमान्तरग्रहणम् । ७ मस्तकोपरितनाः केशाश्चिकुराः ।

द्वारकापुरीमयासीत् । सोपि समनुभूतपराभूत्यपमानपदपर्याप्ति-वर्तनो निवर्तमानान्तर्गतावशेषितप्राणमात्रेऽबलः साफ्त्रपः स्वनगरप्रवेशे सत्रासमुद्बुध्य प्रागभिहितसंधस्तत्रैव भोजकटं नामोपनगरमधिकटमभिनवं पुरं निर्माय निर्भयलज्जं निजनिवासं तत्रैव समकल्पयत् । हरिरपि सततकृतविवाहोपि प्रथमविवाहमहोत्सवसुखमनुभवितुकामो द्वारकायां यथाविधिनिरवधिकानन्दसंसारकारिणीं रुक्मिणीं पर्यणैषीत् ।

तदाशयग्रहो द्वेधा राजतो मुरवैरिणः ॥
द्विजन्मसाक्षिकः पूर्वः परस्त्वखिलसाक्षिकः ॥७२॥

अथानतिलघीयसैव समयेन पुराप्रतिज्ञातवसुदेवाज्ञापितसर्वज्ञतपोभङ्गरूपगुरुकार्यभारतया पुरारातिनयनानलज्वालपटलावलीढं पुनरपि वासुदेवांशरूपेण शरीरकामकामं कमलापतिमनःसमनुप्रविश्य वैदर्भीगर्भादाविर्भूतमर्भकभावमापन्नं प्रद्युम्ननामानमनतीतदशाहमन्तर एव शम्बरासुरेण निजनिसर्गरिपुरयमित्यपहृत्य मध्येसमुद्रमुपक्षिपन्तं मङ्क्षु संलक्ष्य कश्चिन्महान्मत्स्यविशेषस्तमच्युताग्र्यसुतं जग्रास ।

मीनकेतुरसावस्मान्दण्डं चिरमलम्भयत् ॥
इति वैरीव मीनस्तं निजगार महाशिशुम् ॥ ७३ ॥

ततस्तं कामजठरं पाठीनवरं कठिनतरशासनाय शम्बरासुराय धीवरैरुपहारीकृतं क्रमेण सूपकारकरगतं च तैरेवं शङ्कुलया

---

१ ब्राह्मणसाक्षिकः २ केतुसापेक्षत्वादिति भावः । ३ पाठीनो महामत्स्यः 'सहस्रदंष्ट्रः पाठीनः' इत्यमरः

पाकनिष्पत्त्यै शकलीकृतमवलोक्य तदन्तर्गताविर्भूतमद्भुतं पाकविशेषमशेषा अपि ते विशेषविस्मयान्तराः पौरा गवाधिपत्यपदेधिकृतायै मायावत्यपराभिधानायै मतिमत्यै रत्यै तमत्यादरेण समर्पयामासुरासुरकृत्यमपि यथाविदितं कथयामासुः । सापि किमिदमद्भुतमिति यावदाशङ्कमानमानसा तावदेव सहसा समागतदेवर्षिवरनिरूपिततदाखिलवृत्तश्रवणसंजातहर्षा विशिष्टादिष्टसुलभीकृतपतिभावेन तदादिवमनुपश्यन्त्येव सती सा संतोषेणाहर्निशं सविशेषं परिपुपोष । तदनु कियतापि समयेन संजातयौवनावस्थाविकासो द्युम्नकान्तिः[1] प्रद्युम्नः स्वस्मिन् स्वशरशरव्यतां[2] मायावतीदृगञ्चलभङ्गीतरङ्गोत्तुङ्गेङ्गितैरवलोक्य किमेवं मयि मातृरूपापि सत्यन्यथाचरतीति यावदाशङ्कितचेतास्तावदाकर्ण्य तन्मुखादेव निखिलसुखशालिवनमालिकुलतिलकायितात्मवृत्तं सद्वृत्तशिरोमणी रमणीव्रतररमणीभावेन तामपश्यत् ।

साङ्गोपि हा हन्त कथं न सोयमात्मानमेव प्रजहार यद्वा ॥
अपि क्षणं यो नहि....न तत्र चित्रा स्वाहिता प्रतीतिः॥७४॥

तदनु विना शम्बरासुरविनाशनं न शमसीममिति चिन्तयानः सद्य एव प्रियाप्रद्योतितानवद्यमायाभञ्जकविद्यया विद्योतमानः प्रद्युम्नो नाम्ना तमाहूय सत्वरमाहवाय समागतं च विविधमायाजालमदभ्रतरभ्रमकल्पमल्पं परिकल्पयन्तमप्यन्तकसाद्विधाय कृतकृत्यमात्मानं मन्यमानोनन्यजन्मा कृतज्ञधीरन्यगत्या तयैव मायावत्या रत्या सहात्यादरेण तद्गृहं विधाय विहायःपथेनैव यथासुखमाखि-

---

१ द्युम्नकान्तिः सूर्यवत्तेजस्वी । २ शरव्यतां लक्ष्यताम् ।

लनाथसनाथां द्वारकापुरीमुदारचरितः सदारः समभ्यगात् । तत्र च ।

कान्तासमेतमवरोधवधूजनस्तं
मत्वा परं ह्नियमुवाह विदर्भजा तु ॥
ज्ञात्वा पयोधरपयःस्रवणादनन्य-
जन्मानमेनमपि नावजगाम कामम् ॥ ७५ ॥

प्रद्युम्नमादाय विनष्टलब्धं विदर्भजामन्यत भूरिलाभम् ॥
कान्तातितिस्तत्प्रपदं विलोक्य स्वलाभबुद्ध्या मुमुदे परापि ७६॥

तदनु विदिताखिलवर्तनोपि लोकसरणिमनुवर्तमानः श्रीकृष्णः स्वयं तूष्णींभूतो वृष्णिजनांस्तदानीमेव देवमुनिद्वारा विगतद्वाप-परान्विधाय द्वारकायां विरवधिसुखर्द्धिगर्जितैर्वर्जिताश्लीलवार्तैः सर्वैस्तैराप्तवर्गैः सहागर्वमेवामन्दमानन्दमन्वहमन्वभूत् । अथ कदाचिदत्रासं सत्राजित्सूर्यमुपास्य तद्वितीर्णस्यमन्तकमणिमतिरमणीयमनणीयस्तेजोमणिं कण्ठेबिभ्राणस्तरणिरपर इव भ्राजमानो द्वारकानगरोपकण्ठमुपसर्पन्तमकुण्ठमणिकिरणतेजःप्रसरमसृणितशरीरस्तवेक्षणाय कर्मसाक्षी साक्षादधोक्षजागत इति निखिलनागरिकलोकानल्पकल्पितकल्पनाजालस्याहो वश्चक्षुःपाटवमिति सोपहासं कृतमन्दस्मितेन मुकुन्देन दूरीकरणाय निरूपिततत्त्ववृत्तान्तः स्वसदनमासाद्य निजदेवतागारे द्विजवरकरतस्तमनर्घ्यमणिमभिपूज्यास्थापयत् । तदनु कदाचित्तमेव मणिमुदासीनगिरैव दामो-

१ रुक्मिणी । २ तद्दत्तम् ।

दरेण महाराजोग्रसेनार्होयमिति प्रार्थ्यमानमप्यप्राप्तं प्रसेनो नाम तदनुजः स्वकण्ठेत्युत्कण्ठया बिभ्राणोदभ्रतरपापर्द्धिव्यापारेण विपिनसीमनि संचरमाणोकस्मादेव घस्मरेण केनापि केसरिणा मणिहरणपूर्वकं व्यापादितस्तं च समणिं केसरिणं कान्तारगिरिकन्दरान्तरे परिभ्रमन्तमवलोक्य त्रैलोक्याक्रान्तत्रेतापराक्रमो महानृक्षराजो जाम्बवदभिधानो र(ऽ)सकौ मणिरसमानकौस्तुभस्तोककौतुककेलिललित इति मत्वा निहत्याशु तमादाय मणिमामोदसंभृतः स्वबिलमनुप्रविश्य निरुक्तमणिवियोगेन विविक्तमात्मानं व्यक्तशक्तिशालित्वमनैषीत् । इत्थमनध्यक्षमेव चलन्तं संविधानमजानता सत्राजिता जातत्रासेन रत्नार्थनाभग्नमनोरथेनात एव तत्र जाततृष्णेन कृष्णेनैव प्रायशः प्रसेनः प्रसह्यप्रलयं प्रापितः स्यादित्युत्पादितस्य प्रवादस्य द्वारकालोकप्रसृतस्य परिमार्जनाय सर्वविदपि जनार्दनः सर्वजनसाधारणसरणिमनुरुन्धानः शोधनाय प्रसेनस्य सह भृत्याप्तवर्गैः विकटाटवीतटं झटिति पर्यटन्नेव विशकलितसकलावयवमवलोक्य प्रसेनं तद्धन्तारं केसरिणमपि निहत्य कोपि बली वलीमुखलीलो बिलमेतदलंप्रविष्ट इति स्पष्टं निर्णीय तूर्णं बिलाभ्यर्णे एव निजानवस्थाप्य स्वयमेकाकी तदनु प्रविश्य समीक्ष्य च स्यमन्तकमनन्तकान्तिमुपान्ते बालक्रीडनकतया विन्यस्तं यावद्गृहीतुकामस्तावदेवाद्भुतभयत्रासकम्पगात्राया धात्र्याः परित्राहीत्याक्रोशेन सक्रोधमागच्छ तेच्छभल्लमल्लायाष्टाविंशत्यहोरात्रमत्रासमेव मुष्टामुष्टि निष्पिष्टगात्रयष्टिकं

१ घस्मरेण क्षुधितेन । २ वानरवच्चेष्टाकारी । ३ मातुः ।

युद्धं सिद्धाञ्जनमिव वितीर्य तदनु स्मृतपूर्वावतारचरिताय विज्ञा-
तस्वरूपाय कृतविविधप्रणामाय शरणागतायाभयवरप्रसादं सं-
ददानोतिमोदेन तेन स्वान्यायक्षान्तिविन्यासाय समर्पितामनन्य-
लावण्यामगण्यपुण्यामात्मकन्यां जाम्बवतीनाम्नीं पारिबर्हायितं च
तमपि मणिमाददानः सादरमापृच्छ्य निखिलाच्छभल्लराजमञ्जसै-
व निर्गत्य कन्दरोदरादुपलब्धमणीरमणीमणिरणीयसा समयेनै-
वारिंदरकरो द्वारकापुरमधिगम्य पूर्वं धिगस्त्वेनमनृतवागयं नृशं-
सो यमयशःकन्दोयं मुकुन्दविरहे हेतुरयमेवासंदर्शनीयमुखः
खल्विति बहुविधनगरजनजघन्यशापतापपरित्रस्तचेतसं सत्राजितं
सभायामाहूय निखिलापादाननिवेदनपूर्वकं सर्वसभ्यजनसाक्षिक-
मधोक्षजस्तमेव मणिवरमच्छभावेन प्रायच्छत् । स च समधि-
गतालभ्यमणिरपि कृतनिरवधिकमाधवापराधतया सर्वत्रापि सा-
पत्रपः सत्राजिदत्रामुत्रापि पवित्रयशस्त्राणोपायं निजकन्यादाना-
दन्यं मनागप्यनालोचयंस्तदानीमेव सत्यभामाभिधानां सौन्दर्य-
प्रधानां बहुभिरभ्यर्थ्यमानामपि निजनन्दिनीममन्दानन्दतुन्दि-
लाय यदुनन्दनाय ददन्ननन्यजनजघन्यकर्मजन्यदुष्कीर्तिनिवर्ह-
णाय पारिबर्हतया समर्पितमपि मणिं त्वदुपान्ते एव नितान्तमा-
स्तामेष मणिर्नामास्माकमस्मिन्नभिलाषलवोपीति माधवोदीरिताभि-
नवोक्तितः पुनर्गृह्णन्नह्नाय निह्नुतदुर्यशाः केशवानुशासनेनैव नि-
जनिशान्तमधिगम्य शान्तवृत्तिरध्युवास ।

रमणी मणिनैवाप्ता पूर्वमित्यच्युतो मणिम् ॥

१ प्रसन्नतया । २ निजगृहम् ।

प्रत्यदात्तत्सुतानेत्रस्तत्र सत्राजिते क्षमम् ॥ ७६ ॥
रमणी मणिनैवाप्तामिति मत्वैव माधवः ॥
प्रत्यदात्प्रियवाक्येन तत्र सत्राजिते मणिम् ॥ ७७ ॥

ततश्च ।

अक्रूरकृतवर्मभ्यां शतधन्वा प्रकीर्तितः ॥
सत्राजितं हत्वाऽहरद्रत्नं कुरूनथ हरौ गते ॥७८॥
पितृनाशार्तया सत्यभामया गतया कुरून् ॥
नीतो हरिः परीघातमियेष शतधन्वनः ॥ ७९ ॥
विन्यस्य मणिमक्रूरे पलायितममुं भयात् ॥
योजनानि शतं शौरिर्न्यवधीद्बहिरर्थदृक् ॥ ८० ॥
तस्मिन्मणिमदृष्ट्वातस्ततोक्रूरमयाचयत् ॥
लब्ध्वा च मणिमक्रूरादस्मै प्रत्यर्पयन्मुदा ॥ ८१ ॥

अथ कदाचित् ।

जगाम निर्वर्णयितुं ततोर्जुनं हरिर्हरिप्रस्थमतीव लालसः ॥
विलोक्य पार्थः परभागभागभूदपार्थखेदापहरं जनार्दनम् ॥ ८२ ॥
परस्परं परिष्वज्य ततः कृष्णार्जुनावमू ॥
रक्तावतितरां नेदं चित्रं यन्मित्रता तयोः ॥ ८३ ॥

तदनु युधिष्ठिरैकनिष्ठप्रेमतया कतिपयदिष्टं तत्रैव कृतावासः श्रीनिवासः कदाचिदर्जुनेन सह पूर्णमनोरथोपि रथमधिरुह्य दूरीकृतदुरितोपि पापर्द्धिकाङ्क्षया विगतमोहोपि गहनमवगाह्य वृषै-

---

१ उक्तः । २ इन्द्रप्रस्थम् । ३ कतिचित्कालम् ।

कगवेषणानुरक्तोपि नानामृगान्वेषी भूत्वा सततपरितृप्तोपि तृष्णा-परीतो यमुनामुपगम्य निपीतपरजीवनोपि स्वादूदकं निपीय सुरत-रुचिरलीलोपि मदनारिलुब्धकचूडामणिसमन्वयी तन्वतीं तप-स्थितिं कामपि तन्वङ्गीं तेनैव पथा संचरमाणामम्बुजलोचनामवलो-क्य कल्याणगात्रि का त्वमत्रैकाकिनी वनदेवतेव कानने संचरसि का च वा तवास्ति कामनेति धनंजयमुखेन कृतप्रश्नां सत्यमस्मि वन-देवतैवाहमस्य क्षेत्रस्य मनोहरतरुणातिलोभनीयस्यासन्नपुष्पोद्गम-स्य माधवसमागमं प्रतीक्ष्यमाणा सवितृतनया कालिन्दीति व्य-वह्रीयमाणाभिधानाधिकाननं संचरामीति विशदीकृतनिजाशयां निजशयेनालम्ब्य रथमधिरोप्य दृष्ट्वा च युधिष्ठिरादीननुपदमेव द्वारकामुपगम्य यथाविधिविधानमुदवहत् ।

विन्दानुविन्दभगिनीं मित्रविन्दां ततो हरिः ॥
हरन्हितकुलाच्छौर्यादुपयेमे विधानतः ॥ ८४ ॥

अथाग्नजितः कोसलेश्वरस्य दुहितरं सत्याभिधानां वृषभसप्त-कविजयलभ्यां परिणेतुकामो द्वारकाधीशो भृशं कोसलपतिपुर-मुपगम्य तदनुमतेनैवानितरजय्यानपि तान् सप्तापि वृषभान्युगपदेव निमिषमात्रेण मिषत्सु सर्वेषु भूपालेषु सकलकलासिन्धुर्गुणबन्धन-तो वशीकृत्य तां पर्यणैषीत् ।

भद्रात्मा गोपतिः शौरिर्वृषभस्तनुमानिति ॥
मत्वातिविस्मिताः सर्वे सत्याजी....वृषाति (?) ॥ ८५ ॥

---

१ प्रश्यत्सु ।

श्रुतकीर्तिसुतां ततोनुभद्रां परिजग्राह स लक्ष्मणां च माद्रीम् ॥
विधुरीप्सितलक्ष्मणायुतोपि विकलङ्को भवति स्म विस्मयाय८६॥

अथ भूमिसुतं हत्वा मुरारिरमुनार्जितम् ॥
आहरद्राजकन्यानां षट्सहस्त्राधिकं दश ॥ ८७ ॥

कन्याराशिरसावन्यो भौमभोगार्हतामगात् ।
विधुः स्वगृहबुद्ध्या तु बुभुजे विस्मयाय तत् ॥ ८८ ॥

कुसुतस्य हि जीवनादनर्थः कलयन्नेवममुं जघान शौरिः ॥
रमणीर्बुभुजेपि तस्य चित्रं........तथापि नो कथापि ॥८९॥

तदैव प्रेयसीप्रेरणया नन्दननिवासिनं पारिजातमुन्मूल्यप्रक्रान्तसमरानमरानभिभूय विश्वंभरः सत्यभामाभवनप्रमदवनमास्थापयत् ।

पारिजातप्रियाप्रीत्यै नन्दनादुद्धरन्नपि ॥
नन्दनं प्रापयामास प्रियायाः प्रियमाचरन् ॥ ९० ॥

तदानीमेव ।

दिव्याः शिलीमुखगणा[1] हृतपारिजात-
मन्वेत्य तं यदुपतिं द्रुतमात्तगन्धाः ॥
प्राप्ता वनेषु सुमनःसुमनस्सु[2] यद्वा
तेजो भवेन्मधुहरन्कथमन्तरेण ॥ ९१ ॥

जगदाहृतवल्लभात्प्रहर्षो हरितः सिध्यति पारिजाततो यः ॥
तदपि त्रिजगत्पतिर्नियुक्तः प्रियया तत्सुमनःपरीक्षणाय ९२॥

---

१ शिलीमुखगणाः भ्रमरसमुदायः । २ देवकुसुमेषु ।

यस्मिञ्छंकरदारसौरभजरीजृम्भत्कटाक्षच्छटा-
पाता(:) कल्पलतावितानसुमनोगुम्फप्रियंभावुकाः ॥
तस्यासौ नवकालिदासविदुषः काव्ये तृतीयोत्तर-
श्चम्पूनामनि धीमतां कृतसमुल्लासो विलासोगमत् ॥९३॥

इतिश्रीमद्भागवतचम्पूकाव्ये कालिदासकृते चतु-
र्थोयं विलासनामस्तबकः ।

---

## पञ्चमः स्तबकः ।

अथ ।

ताभिः समं मधुजितः सुरतापवर्ग-
हारी बभूव तरुणीभिरथो विहारः ॥
स्थाने विचित्रचरितो वनमालिनद्ध-
मामोदवान्सुमनसां निवहो बभूव ॥ १ ॥

अथ कदाचन सकलमहोत्सवमहानिकेते गगन इव चन्द्रकान्तालंकृते रजनिकरहृदय इव पुष्परागाश्रिते सत्यलोक इव मुक्तौघसंकुले कमलाकर इव पद्मरागशोभिते केसरामोदिते च पाकशासन इव वज्ररमणीये वासन्तिकावन इव प्रवालसमृद्धे

---

१ शङ्करस्य शिवस्य दाराः स्त्री पार्वती ( काली ) तस्या सौरभं मनोज्ञं यथास्यात्तथा जरीजृम्भन्तः अतिशयेन पुनःपुनर्विकासयन्तः कटाक्षास्तेषां छटापाताः । कथंभूतास्ते पाताः कल्पलतेति । २ तृतीयादुत्तरश्चतुर्थः । ३ सुमनसो देवाः पुष्पाणि च । ४ मुक्तानां मोक्षवतामोघैः समुदायैः संकुले व्याप्ते। पक्षे मुक्ता मौक्तिकाः । ५ पद्मराग उपलः पक्षे पद्मानां रागो रक्तिमा। ६ वज्रमशनिर्हीरकश्च । ७ प्रवालैः पल्लवैः विद्रुमैश्च ।

शरत्कालगगन इव सिताभ्रभासुरे हंसमण्डिते च नन्दन इवासन्नपारिजाते हरिचन्दनामोदवासिते च गोष्ठ इव भद्ररसाश्रिते गोपालवासयोग्ये च स्वर्ग इव सुमनःसंकीर्णे सुरताधिगमयोग्ये च कैलास इव सदाशिवैकनिलये नीललोहितस्पृहणीयरत्नास्पदे च शरत्कालपुलिन इव हिंमवालुकालंकृते शार्दूल इव मृगमदामोदहारिणि मयूरमेचक इवौपँबर्हभासुरे चन्द्रमण्डल इव दर्शरेखानुवृत्ते भागवत इव शुकालापरमणीये बौद्धदर्शन इव साधुदूष्ये पाण्डव इव पाञ्चालिँकाकमनीये कल्पपादप इव रमणीयचित्रफलके सुमेरुशृङ्ग इव कल्याणवर्णे सुरतसमय इव कपोतकूजितरुचिरे पुष्पक इव विष्णुपदसंचारयोग्ये बलिभवन इवानँन्तभोगास्पदे मेरुकन्दर इव दिव्यभल्लूँकबालालंकृते हरिश्चन्द्रचरित इव सत्यानपायिनि रामचरितलक्ष्मणानपेते महाराजकुल इव भद्रासनयोग्ये गङ्गाप्रवाह इव काँलिन्दीमिश्रिते न्यायदर्शन इव जातिमालानपेते चैत्ररथ इव मनुष्यधर्माश्रितलोकपालविहारयोग्ये प्रपोदकइवेष्टगन्धेन सम्पन्ने सत्काव्य इवोत्तमश्लोकगर्भे स्वयंवरप्रदेश इव जगतीपतिसमाश्रितभूरिमञ्चाश्रिते सुग्रीवसैन्य इव कुमुदामोदिते हिमगिरिकन्दर इव पुण्डरीककलाश्रिते इन्दिरामन्दिर इवाँलिगीतिस्तुतकमलानुषक्ते क्षीरसमुद्र इवानेकानर्घ्य-

---

१ सिताभ्रं स्वच्छमेघाः सिताभ्रः कर्पूरश्च । २ सुवर्णवालुका शीतवालुका च । ३ बर्हः मयूरपिच्छम् शोभा च । ४ पाञ्चालिका द्रौपदी पुत्तलिका च। ५ अनन्तः शेषः श्रीकृष्णश्च । ६ भल्लूका अच्छास्तेषां बालास्ताभिलंकृते । अत्र भल्लुकबाला जाम्बवती । ७ कालिन्दी यमुना तन्नाम्नी स्त्री च । ८ अलयः सख्यः भ्रमराश्च ।

रत्नविभवे कचन दिव्यभवने पर्यङ्कमधिशयानं सुप्रबन्धमिव विदग्धसुहृग्भणितिरीतिबद्धादरं सारसमिव लक्ष्मणालीलालोलं धर्मात्मजमिव सत्योल्लङ्घनभीरुं भार्गवमिव रवितनयासुरागिणमृक्षराजतनयानुरागिणं च सिद्धरसमिव प्रद्युम्नजनकमाराममिव भद्रागमसंवर्धितामोदं ब्रह्मलोकमिव प्रसन्नमानसं दुर्योधनमिव मित्रविन्दानुरक्तं साधुवृन्दमिव सत्यभामासमाश्रितं समन्दस्मितं मुकुन्दमिन्दिरेव गोविन्दमनपायिविलासमुपासीना भगवती भीष्मकतनया सविनयातिशयमेव करकलिततालवृन्ता मञ्चप्रान्तैकदेशमभजत् ।

अत्रान्तरेनवधिभीष्मसुतानुराग-
मन्तर्निरुध्य परिहासकथाप्रदानः ॥
तां भीरुमश्रुतिचरैरुरुजीविताधि-
काशावशां हरिरकम्पयदुग्रशब्दैः ॥ २ ॥

तथाहि । अयि विदर्भराजतनये विनयेन प्राप्तं कथमासन्नजीवितेशपदं पुण्यजनागण्यमतिमृदुहृदयतया भीरुजनानुरक्तं खद्योतातिशायितेजसं सम्पदि किन्नरेशं शान्तनवकीर्तिं तव सहजप्रेमपात्रं गुरुस्पृहाविषयं मधुपर्कसमर्पणावसरे नितान्तमर्भकया त्वया निःशङ्कमवलोकितमत एव वामानुसदृशमनङ्गैकतुलनीयरूपमसुकुमारप्रभावतया मयाप्यवक्रमणीयं मयि निश्चितासुहृद्भावमन्तर्ग-

---

१ सारसस्त्री तन्नाम्नी कृष्णपत्नी च । २ सत्या सत्यभामा पक्षे सत्यमृतम् । ३ मित्रविन्दो मित्रसमुदायः मित्रविन्दा स्त्री । ४ खद्योतमतिक्रम्य शेते तिष्ठतीति खद्योतातिशायि तेजो यस्य तम् ।

तद्धनुर्वेदनैपुण्यं परासुक्रीडनप्रवीणं स्वस्य निरपायत्राणायाश्रयीकृतभूभृदन्तरविशेषतो मागधभावानुवर्तिनं अर्जुनस्यापि मालिन्यसम्पादिकामन्यामेव कीर्तिमार्जयन्तमाश्रयाशतेजसं निजप्रतापेन पाकशासनेप्यासक्तिं व्यक्तीकुर्वाणं निगीर्णपरपक्ष[1]रागमण्डलतया दर्शमनुकुर्वाणं बलादेव धात्रीमाक्रम्य भुञ्जानं पुरुषऋषभं पशुपालमपहाय दोषाकरकुशलसम्भवमसत्प्रकृत्याश्रयं कदाचिदपि पराक्रमाविषयं बलिविरोधेन संकोचितात्मप्रभावं भुवि परोत्कर्षमवलोक्य संप्रति विशेषतः क्षमाश्रितमक्षेमशासनकाममभद्रासनयोग्यमतिदुर्लभरूपं त्वया परासक्तहृदययापि दैवमनुगतया लब्धमत्युन्नतबलानुवर्तनेन कालं क्षपयन्तं भुजङ्गभोगलोलात्मानं सर्वदा वाहिनीशमर्जुनवर्तमानमगणितरिपुभयतया साम्प्रतमप्यपरंवाहिनिशं शरणं याचितवन्तमजातरूपसम्पन्नं हरिपूजानिवारणेन गोत्रोत्[2]पाटनेन कुवलयापीडमर्दनेन सधेनुकशकटतर्वर्वृषभालम्भेनालसद्दृग्भोग्यतया चातिरिक्तकीर्तिमसंगलेशमतिदूरदर्शिनं मामकामयथाः ।

मृगराजसुते तूर्णमधुना वरमीप्सितम् ॥

मा भैषि (षीः) भिद्यते तेन परलोकार्हतासते(?) ॥ २ ॥

एवमश्रुतपूर्वविप्रियाभासभाषिणि वासुदेवेऽशनिहता लतेव दहनवलयिता मृगीव दशवदनकरगता सीतेवाहल्येव दुष्टापराधक्रुद्धगौतमकातरा शकुन्तलेव दुर्वासःक्रोधविषयीकृता निःसंज्ञा वसुन्धरायामपतत् ।

---

१ शत्रुपक्षः कृष्णपक्षश्च । २ पर्वतोद्धरणेन ।

असामान्यगुणा सेयं य इच्छाशब्दसन्ततिः ॥
न च श्रियै न संज्ञायै सुदृशो विस्मयाय तत् ॥४॥

तापोभवन्मुरजितः कृतविप्रियस्य
खिन्नाखिलावयवया प्रियया बभूवे ॥
जातो हरिर्दलितहृद्दलितापराध-
स्तस्या हृदि प्रवहति स्म तदास्रधारा ॥ ५ ॥

अथ भगवानपि निजजनपरित्राणायानुकम्पार्णवस्तूर्णं पर्यङ्कतोवतीर्य परिकलाकौशलानभिज्ञां लब्धसंज्ञां प्राणप्रियामुत्संगसंगिनीमाधाय मधुरमधुरया गिरा समाश्वासयन् मुहुर्मुहुरालिङ्ग्य गण्डस्थलमचुम्बत। व्यंक्तपरिहासमवादीच्च।

प्राणादपि प्रियतमां तपसाप्यलभ्यां
पातिव्रतीमपि[1] शरीरवतीमपि त्वाम् ॥
आर्तान्विधाय कुररीमिव सारसो मे
शिक्षान्विधेहि कुचभूधरपातनेन ॥ ६ ॥

एवमाश्वासिता तेन प्रसन्नवदनाम्बुजा ॥
मत्वाश्लेषवचस्तत्त्वमथोवाच विदर्भजा ॥ ७ ॥
निगूढपदविन्यासश्चक्रिणस्तव साम्प्रतम् ॥
अजिह्मगत्यानुकथं[2] ज्ञेयः सोयं मया पुनः ॥ ८ ॥
पुरुषाधमतां चैव त्वयि सर्वातिशायिताम् ॥
मत्वा तत्त्वं तव गिरामाप्ता सम्प्रति निर्वृतिम् ॥ ९ ॥

---

१ पतिव्रता एव पातिव्रती स्वार्थेण् 'टिड्ढाणि'ति ङीप्। २ अजिह्मगत्या अजिह्मा सरला गतिर्यस्यास्तया।

प्रान्ते यदवदः स्वस्याः परः प्रेयानपायकृत् ॥
याचस्व वरमित्येतदाशास्यमधुना मम ॥ १० ॥

एवमभिहितवत्यां प्रियायाम् ।

सदिष्टा योगशङ्कायां विदर्भभुवि माधवः ॥
तदयोगभयात् सद्यः सकुशं काममार्जयत् ॥ ११ ॥
प्रत्येकमभवंस्तासां ततो दश दशात्मजाः ॥
जातास्तत्पुत्रपौत्रास्तु संख्यावन्तोऽमिता अपि ॥ १२ ॥
प्रद्युम्ननामाप्यथ रुक्मवत्याः करग्रहं रुक्मभुवः[1] स तेने ॥
स भूरिकाङ्क्षाकलितः कथं नु स चित्तजभ्रान्तिमुपैतु तेन १३॥
अनिरुद्धोऽभवत्तस्या अनिरुद्धपराक्रमः ॥
रोचना रोचनायास्य जाता पौत्री तु रुक्मिणः ॥ १४ ॥

तत्रानिरुद्धविवाहमहोत्सवावलोकनाय निसर्गरुक्मिवैरिणावपि रुक्मिणीप्रीतिगुणवशतया परित्यक्तवैराविव रामनारायणौ भोजकटं नाम तन्नगरमगमताम् । तत्र च । निष्प्रत्यूहेन परिपूर्णे करग्रहमहोत्सवे ।

रामं जयाक्षविद्यायामिति कालिङ्गचोदनात् ॥
अक्षैर्भीमसुतोदीव्यत्कृतान्तस्तम्भसानुभिः ॥ १५ ॥
जयोभवत्पुराभामा रामस्याप्यक्षतः कवेः ॥
रामस्यैव तदाहन्ता ततो जातः पराजयः ॥ १६ ॥

एवमसकृदधिगतविजयोपि सीरपाणिरक्षवीरनासीरसंचरणं[2][3] न गोपालविषय इति रुक्मिणा तीक्ष्णतरवाणीकृपाणधाराभिहतः

१ रुक्मभुवः रुक्मकन्यायाः । २ सीरपाणिर्बलरामः । ३ नासीरं गर्वः ।

समुपहसितश्च कलिङ्गेन त्यक्ताप्तसम्बन्धलिङ्गः सक्रोधमुद्यम्य परिघं सद्य एव रुक्मिणं शमनभवनभूषणं विधाय कलिङ्गमपि भग्नदन्तं चकार ।

रोचनामनिरुद्धं च रथमारोप्य माधवः ॥
पुरीं सोनुचरैः प्रायात्परिपूर्णमनोरथः ॥ १७ ॥

अथ पुरा खलु सांध्यताण्डवसमाराधितखण्डपरशुविश्राणितासीमबलबाहुसहस्रो बाणो नाम बलितनयो निजभुजबलसंरम्भलक्ष्यभूतं प्रतिपक्षमलक्षयन्नतिरूक्षाक्षरेण भगवन्नप्रातिरथस्य मम भारायैव परं भुजसहस्रमजनीति भुजकण्डूतिनिर्धूतये त्वयैव सहकलहमभिलषामीति प्रमथनाथमेवमभ्यर्थयत् । तदाकर्ण्य कर्णपरुषमतिरोषणो वृषकेतनस्तवकेतनभङ्गसमय एव मदधिकबलिः कोऽपि तव खण्डितविग्रहावयवाय विग्रहाय भविष्यतीति शापापरपर्यायभूतामेव वरदवाचमवोचत् । ततश्च ।

उषाख्यया पुत्रिकयास्य रेमे स्वप्नेनिरुद्धोननुभूतपूर्वः ॥
स्वप्नस्थ एवातनुखातितोस्याः कोशः सदानन्दमयो बभूव १८॥

तदानीमेव ।

विहाय कान्तं क्व नु यासि मामा-
मिति ब्रुवाणा बुबुधे सखेदम् ॥
बोधात्सुखं हि श्रुतिसिद्धमस्या
बोधेन दुःखाप्तिरिदं विचित्रम् ॥ १९ ॥

तदानीमेवमुत्स्वप्नायमानामेनां कुम्भाण्डनाम्नो बाणमान्त्रिण-

---

१ यमगृहालंकारम् । २ मा माम् मामित्यर्थः । स्वप्ने भाषणादेवं विसङ्गतोक्तिः।

स्तनया चित्रलेखा समीपतः शयाना सखि कतमस्तव वल्लभः क-
मेवं मृगयस इति सनिग्रहं मुहुः पृच्छ्यमानाम्

मुह्यन्ति यं स्वसुहृदः श्रवणेपि सायं
वाचां विनानुभवमेव किमाविरस्तु ॥
आसीत्करस्थ इव मां गमयन् सुखाब्धि-
मन्तर्हितोभवदथैष गुरुप्रभावः ॥ २० ॥

यद्यप्येवं तथापि ।

पीतवासा गुणावासः[1] श्यामः कमललोचनः ॥
अधरं मधुरं स्वस्य पाययित्वा तिरोदधे[2] ॥ २१ ॥

इत्यनुभवानुरोधिनीं वरवाणीं ब्रुवाणां तदनुलक्षेण क्षणमात्रा-
देवं देवनरकिन्नरगन्धर्वविद्याधरेषु सौन्दर्यप्रसिद्धानखिलानालि-
ख्य पुरुषान् कतमस्तवाभिलाषविषय इति पृष्ट्वा हृष्टातिहर्षेणा-
यमेव सखि स प्राणसख इति स्पष्टं तन्निर्दिष्टं प्राद्युम्निमन्यदुर-
वापप्रवेशायामपि द्वारकायामाविश्य भृशं निशायां निजयोगब-
लेन अन्तर्वेश्मनि मञ्चमधिशयानमेव निजपुरीमानीय समुद्बोध-
यित्वा च ततस्तयोरन्योन्यानन्यजन्मकृतार्थकरणेन स्वस्मिन् स-
र्वांशतोप्यनन्यधन्यताममन्यत ।

चित्रलेखेयमन्वर्थनाम्नीति मुदिताप्यसौ ॥
मुग्धा पुनरभूत्सेर्ष्या भर्तुश्चरणलेखनात् ॥ २२ ॥

प्रविश्य गुरुकृत्या सा पुरीं द्वारवतीं निशि ॥
अनिरुद्धं ततो रक्तं निन्ये शोणितपत्तनम् ॥ २३ ॥

---

१ सर्वेषां गुणानामावासः वसतिस्थानम् । २ अन्तर्धानं प्राप्तवान् ।

चित्रलेखापि कृत्येऽस्मिन् कुर्वन्ती प्राणवत्प्रियम् ॥
रेमे सममुषा तेन रहस्यविषयेऽनृणा ॥ २४ ॥

तदनु समतीते कतिपयसमये तदन्तर्गृहवर्तिनो रक्षकजनास्ता-दृशं तदद्भुतचरितमनुपलम्भमवलोक्य निजदोषनिबर्हणाय ससाध्वस-मेव राजानमुपेत्य।

शुभग्रहाद्यामधिकन्यकामिमामसत्क्रियापात्रतया विमृश्येत ॥
उपस्थितं दुःसमयं न्यवेदन्नुपायदोषज्ञतया चुकोप सः ॥२५॥

स्वकन्याकामुकस्याथ करग्रहकृते[1] गतः ॥
बाणः स किङ्करान्मूढो निनायोपयमं[2] बहून् ॥ २६ ॥

निहतेषु च बहुषु निजानुयायिषु नितान्तरोषणो बाणस्तमेनं कन्यान्तःपुरगतं भुजङ्गपाशैराबद्ध्य हाहेति क्रोशन्तीमप्युषाम-विगणयन् क्वचन कारागारे न्यवेशयत्। अथ नारदवचनेन विदि-तोदन्ताः प्रद्युम्नसाम्बपुरःसराः यादवा रामकेशवौ पुरस्कृत्य विरचिताभिषेणभूषणा[3] बाणनगरवरणमरुन्धन्। तदैव भगवान-पि वृषकेतनः[4] किङ्करकरुणापरवशेन सानन्दं नन्दिनमध्यासीनः सह कुमारेण परप्रमथैः[5] प्रमथैरपि[6] परिवृतस्तमेवोद्देशमगमत्। तदानीम्।

यस्तत्र त्रिपुरारिशौरिबलयोरासीदसीमो रण-
स्तं वैधात्र्यपि भारती[7] भयभरान्नैवाधिगन्तुं क्षमा ॥

---

१ करग्रहणं कर्तुं बद्धुमित्यर्थः। २ यमसमीपम्। ३ अभिषेणः शत्रुसमीप-गमनरचना। ४ शिवः। ५ शत्रुमथनकारीभिः। ६ प्रमथगणैः। ७ वाणी।

कृष्णो भानुरभूत्स्वभेदनभियाच्छायाच्छलान्मण्डले
सार्थं शोणितपूरपूरिततया नामापि तस्याः पुरः[1] ॥ २७॥
स्वाधीने विजये द्वयोरपि तयोः सत्पाण्डुकीर्त्यावहे
सामान्ये गजदैत्यमर्दनरसे तुल्ये पिनाकग्रहे ॥
अन्योन्येपि खलान्तकारिचरिते स्वाम्ये पशूनां समे
दुर्धर्षं युधि मेनकातनुभुवः[2] प्राप्यं ललङ्घे हरिः ॥२८॥
प्रत्यक्षैव बभूव शक्तिरतुला स्कन्दस्य नैतादृशी
प्रद्युम्नस्य बलादसौ लघुतरस्तास्मिन्महासेनता ॥
नासावन्यबलाश्रितः कलयते तं नीलकण्ठः पुनः
पृष्ठे हन्त तथापि सोयमजयत् षाण्मातुरं नातुरः ॥२९॥
अन्योन्यस्य सदृक्षलक्ष्यमिलनादाबद्धयुद्धाद्रतौ
तौ कण्डूं भुजदण्डयोरनवधिं चित्रं तदैवार्च्छताम् ॥
तत्संवर्णनमात्रलोलमनसां काव्यामृतोत्पादिनां
कण्डूरासनकन्दरान्तरगता[3] नाद्यापि विश्राम्यति ॥३०॥

एवं गङ्गाधरस्य पशुपतिना[4] हरिशिशोरगजात्मजेन सीरिणः[5] कुम्भाण्डेन कृतवर्मणो बाणेन च भवति महति संप्रहारे कृष्णस्य विजयप्रणयतायां व्यक्तायां बाणजनन्या कोटरया निजतनयरक्षणाय केशवं शरणमुपगतया मोचिते धृतप्राणे बाणे च नगरमनुप्रविष्टे ।

---

१ नगर्याः । २ मेनकातनुभुवः पार्वत्यात्मजस्य स्कन्दस्य । ३ कण्डूरा कपिकच्छूः भाषायां 'कुइली' 'कवसकुली' तस्यासनस्य वज्रस्य या कन्दरं कृत्रिमवेष्टणं तेन अन्तरे गता । ४ गोपालेन श्रीकृष्णेनेत्यर्थः । ५ बलभद्रस्य ।

माहेश्वरज्वरं हन्तुं भगवान् वैष्णवज्वरम् ॥
विनिर्ममे तयोरासीद्युद्धमद्भुतकर्मणोः ॥ २१ ॥

तदनु वैष्णवज्वराभिभूतो माहेश्वरज्वरो मधुरिपुं शरणीभूयास्तौषीत् । तथाहि ।

बद्धासौ प्रकृतिः प्रिया तव गुणैः क्रूरान्नरान् बाधते
दत्वा ते वसु मोचयन् गुणगणागूढे मृते दुर्गमे ॥
एतान् पातयसीत्यतस्तव कृपापारं न जानीमहे
चित्रं हन्त पथापि सेयमसतीमाया भवान्तसन्निति ॥२२॥
एक....परभाक्तकाङ्क्षिणि निजे पश्यत्यनश्नत्यपि
स्वैरं स्वादु चखाद निर्घृणमसौ नात्मज्ञ इत्यागसा ॥
पश्चाद्दीनतया श्रियः पतिरिति ज्ञात्वाश्रितं त्वामिमं
निष्पापं च्युतनामरूपमकृताजीवं कृपा ते कुतः ॥२३॥
दृश्यं किंचन नास्त्यनुत्तममनीन्द्वर्कानिलं मत्पदं
काङ्क्ष्यं नेह सुखार्थिनामिति वदन् भङ्क्ते त्वमेकः सुखम् ॥
किंचिज्ज्ञातरहस्यमेव कृतिनं तत्प्रापयत्यादरा-
देनं मुञ्चसि कः पुनः कुत इदं चातुर्यमभ्यस्यते ॥२४॥
दत्त्वा पञ्च यदुत्तरोकरगुरून्मौग्ध्यानुरूपान् भवान्
लोकान् मर्त्यसुरासुराधिपमुखानानन्दकोशं हरन् ॥
किंचिन्नैव करोमि भोगविधुरः संगोज्झितो मां विना
किंचि....धामनीति कृशतां ब्रूषे तु तत्काङ्क्षिणाम् ॥२५॥
आवासं परमश्चितः खरतरादुच्चण्डधृष्टे विषा-
पूरात्संचितसर्वलुण्ठनपदादप्याश्रितो निर्भयम् ॥

सर्वस्वं तमपि स्फुटं हरासि यद्वन्यस्य तस्माद्द्रुतं
यद्बोधे सति दुःखमस्य सततं सा चोरताचातुरी ॥३६॥

एवं स्तुत्वा समासादिताभये माहेश्वरज्वरे निवर्त्यमाने बाणे च पुनः समरवाञ्छया माधवमभिधावमाने ॥

दोर्षां[1]श्छित्त्वाखिलान् बाणं चक्री चक्रे चतुर्भुजम्[2] ॥
भवानुवर्तिनो नाभूत्तथाप्यस्य विशोकता ॥ ३७ ॥

अनन्तरमवशिष्टभुजचतुष्टयस्य बाणस्य कृते समुपजातानुतापं शंभुं प्रसाद्य प्रद्युम्नसुतमुषामपि स्यन्दनमधिरोप्य यदुनन्दनः सानन्दं निजनगरमगमत् । अथ कदाचिद्विहारकुतूहलेन वनमाली सलीलमुपवने प्रद्युम्नादिभिर्विहरमाणः कस्मिंश्चिन्निरुदके कूपे महान्तमेकं कृकलासमाखिलैरतियत्नाकृष्टमप्यचलं तमवलोक्य सहेलमेव वामकरेण बहिर्निष्कास्य करस्पर्शनिर्धूतशापात्तस्मादेवाज्ञातस्यापि ब्रह्मस्वापहारस्य फलमीदृशमपरिहार्यं किं पुनर्ज्ञातस्येति सर्वदेवानभिलषितब्रह्मस्वेनैव भाव्यं मनीषिणेति निजाभिमतमनुशासनमखिलेषु प्रकाशयन्नखिलेशः शाश्वतपदविशदां तदानीमेव दानीशाय दिव्यगतिं तस्मै वितीर्य स्वयमद्भुतचरित्रः पुत्रैः सह पवित्रतरं निजनगरमधिगम्यारीरमत् ।

अथ शापवशात्कृशानुभावं सरटीभूय हरिर्नृगाभिधानम् ॥
नृगं[3]मेव पुनर्विधाय शापक्षपणाद्देवं[4]गमातनोद्विचित्रम् ॥३८॥

अथ कदाचिद्रामोपि सुहृद्दिदृक्षुर्व्रजधराणिमाधिगम्य विविधै-

---

१ बाहून् पापं च । २ चतुःशेषभुजम् सारूप्ययुक्तम् । ३ नृगांगम्यम् । ४ देवलोकगम् ।

राबालोचितोपचितविचित्रप्रश्नोतरचरित्रश्रवणकथनैरानन्दन्नानन्दयंश्च नन्दादीनमन्दानन्दमाभीरकामिनीभिरभिरममाणः कालिन्दीसमाकर्षणेन निजसंकर्षणाभिख्यामखिलेषु प्रख्यापयन् स्ववाससौख्यश्रेणिविश्राणनाय तत्र कतिचिदपि दिनानि क्षणलवपलानीव कुर्वन्नध्युवास ।

माधवाग्र्यः सदा रामः सदारामं च गोकुलम् ॥
युक्तस्तत्र तदावासस्तदुज्ज्वलरसोप्यलम् ॥ ३९ ॥

अथ कदाचन भगवान् वासुदेवो बलरहितं वसुदेवसुतमबलइति मन्वानेन स्वयं च सर्वदैव वासुदेवपदबोधकारिदरकरत्वं मृषाङ्गीकुर्वाणेन करुषाधिपतिना[1] पौण्ड्रकनाम्ना प्रेरितं कमपि संदेशहरं निजसभायामालोक्य तदुदीरितां संदेशकारिकाम् ।

जगतामवनाय वासुदेवो भुवि जातोहमनीदृशः पुनस्त्वम् ॥
शरणं भज यच्छ वा समीकं[2] न मृषालक्षणधारणं क्षमं ते ॥४०॥

इत्याकारकां[3] चातिकर्णपरुषामाकर्ण्य तूर्णमेव सरोषहासवचनजातेन पूर्वं सभ्यैरुपहसितमपहततेजसं राजदूतं तं पराङ्मुखीकृत्यासादितस्यन्दनवरः सपरिवारो वाराणसीमधिगम्य पार्ष्णिग्राहेण सह काशिराजेन युद्धावबद्धादरमागतं करुषाधिपतिमवलोक्य रुषा दुरुक्तितदुत्तरैर्भूयो निर्भर्त्स्य क्षणमात्रेणैव शरजालमालया कृतान्तनिशान्तातिथिरूपं सत्यसारूप्यपदमुपनीय सानन्दमखिलैः सह भवनमधिकशोभमानयशोराशिरभ्यगात् । तदनु-

१ करुषदेशानां राजा । २ युद्धम् । ३ इतिरूपां कारिकाम् ।

पदमेव काशीराजतनूजः सुदक्षिणो नाम पितृवधनिर्यातनकामः[1] सह पुरोहितेन पुरोहितमिदमेव ममेति मूढमतिर्मन्वानो मधुसूदनमुद्दिश्य आभिचारिकं कर्म निर्माय तदुत्थमतिभीषणपुरुषवेषमनलमत्युग्रमुग्रसेनाधिष्ठितां द्वारकां प्राहिणोत् । तत्रात्यद्भुतचरित्रशाली चतुरङ्गलीलया क्रीडमानं श्रीगोविन्दस्तथाविधमागतं नगरवासिजनान् पीडयन्तं लोकमुखादवगत्य झटित्यभयं निजजनेभ्योवावितीर्य तत्क्षपणाय स्वपार्श्वस्थितं सुदर्शनमाज्ञाप्य तद्द्वारैव तत्पराभवं विधाय तादृगतलोत्पादकं च यजमानपदमारूढं सुदक्षिणमपि क्षणमात्रत एव सह दुर्वृत्तैस्तत्सहचरैः कृतान्तक्षयमुपनीय स्वयं निजसदनविलासी सन्नेवारीरमत् ।

ज्वलनो न सुदक्षिणेष्टिकोप्यभवच्चक्रभयापनुत्तये ॥
विमुखेपि हरौ भवेच्छुभा कतमेष्टिर्विधिनापि चोदिताः ४१
दक्षेन यजमानेन (वि) हितेन वृषाकपेः ॥
..................मिष्टिर्मेष्टगुणा कथम् ॥ ४२ ॥
स सप्ततन्तुजालेन गुणसा(क्षा)दणीयसा ॥
हरिमाक्रमितुं वाच्छन्प्रबभूवासुदक्षिणः ॥ ४३ ॥

तदनुगोकुलरामे विहरति बलरामे सरभसमागतः कोपि कपिवरः सुग्रीवमित्रपदो मैन्दसोदरो द्विविदो नाम कृतपातक इव नरकप्रणयी चक्रवाक इव मित्रविपत्तिपरितप्तः सुहृदानृण्यकामनया नितान्तमानर्तविषयकदनमापादयन्कदाचन मदिरास्वादमेदुरीकृतमदस्य बलदेवस्य ललितगीतमाकर्ण्य रैवतकमुपजगाम ।

---

१ पितृवधप्रतीकारेच्छः ।

नीलाम्बराश्रिततनुं चलितांशुकाभिः
कान्ताभिरावृतममन्दकरप्रचारम् ॥
तं रेवतीरमणमश्रमवाद्यगीतं
बालो विलोक्य हरिराक्रमितुं चचाल ॥ ४४ ॥

कपेः किलिकिलारावैर्वैक्लैतैरमितैरपि ॥
शृङ्गारैकरसः सोयं सारसाक्षी रहोनयत् ॥ ४५ ॥

सोयं सकलागमाग्र्यलक्ष्यतया हरिपदाभिधेयतया पुरा सुग्रीवमित्रपात्रः तया च वनवासरसिकतया च साम्येपि स्वस्य अच्युताग्रजतया रिपून....मानस्य सहायशून्यतया तमेनमच्युताग्रजमात्मनाविकृष्टं मन्वान इव निःशङ्कं जिघांसुरुपससर्प । रामोपि तं वानरं पुरा प्रियानयनसाहाय्यकारिणं साम्प्रतमपि प्रियानयनाकुलव्यापारत्वेनोपकारिणं वारुणीमदादजानन्निव विधाय विविधमायोधनशमनभवनमनयत् । स्वयं च सानन्दं नन्दादीनाटच्छ्च द्वारकामुपागमत् । अथ ।

सुयोधनसुतां जातु साम्बो जाम्बवतीसुतः ॥
प्रसह्य लक्ष्मणां नाम जहारैकः स्वयंवरे ॥ ४६ ॥

तत्प्रसह्यापहरणं सर्वथैवासत्यमानास्ते मानिनो दुर्योधनादयस्तं बन्धनेन जिघृक्षवोपि कृपणा इव तदीयमार्गणव्यथिताभृशमकृशासूयाः कथमप्येकीभूय बध्वा तमाशु वध्वा सह निजनगरमनयन् । अथ नारदमुखाकलिताखिलतदुदन्तानमर्षप्रकर्षरूषितानशेषानपि जयिष्णून् वृष्णिनिवहांस्तूष्णींभावाय कथमप्यु-

---

१ बलदेवम् । २ हन्तुमिच्छुःसन् । ३ पुरा रामावतारे । ४ सीतानयने ५ प्रियायाः नयनाभ्यां आकुलः कुण्ठीभूतो व्यापारो यस्य तत्त्वेन ।

पलालयन् बलदेवो दुर्योधनहितदृष्टिः स्वयमेव हास्तिनपुरमुपसृत्य तत्र प्रत्युद्गतांश्च तान् सुयोधनादीननामयप्रश्नपूर्वकलौकिकाचारतः समनुगृह्य वक्तव्यांशमशङ्कमेवमवादीत् ।

आज्ञापयत्यनिशमेव नृपालमौलि-
पालीनिलीनपदपङ्कज उग्रसेनः ॥
निर्भर्त्सनं हरिशिशोरबलावशस्य
किं सार्वभौमपरिवृद्धमदक्षमं ते ॥ ४७ ॥

एवमनतिक्रमणीयं शासनमन्धकवृष्णिनायकस्य विशेषतो वर्षीयस इति हितकारिणीमपि बलदेववाणीमाकर्ण्य परस्परमनल्पजल्पनमेतद्वृद्धश्रद्धाविवर्धकं प्रायो नारदस्वरूपमेवेति कृतोपहसितेषु यदामर्षकर्षितहृदयेषु तिरस्कृततद्वचनेषु भृशमपुरस्कृत्य तमपि प्रतिनिवर्तमानेषु सहसा दुर्योधनादिष्वनुपदमेव ।

गर्जन्नसौ भुवनभृद्धतधार्तराष्ट्रां
धात्रीं विधातुमभवच्चपलान्तरङ्गः ॥
क्षोभात्तदा हलधरस्य मही चकम्पे
तर्क्यापि हानिरतिवेलजडाशयानाम् ॥ ४८ ॥

तदनु त्रिपथगापाथःपथेन निजभुवनभूतरसातलप्रापणामेव सलीलं लाङ्गलाग्रेण हास्तिनपुरमामूलमुन्मूलयन्तमपरमिव कालाग्निरुद्रं बलभद्रमुद्वीक्ष्य मङ्क्षु भयत्रासवित्रस्तवक्षसः ससम्भ्रममुपसृत्य सलक्ष्मणं साम्बं पुरस्कृत्य नानाविधान्यनर्घवस्तुस्तुत्युपहारीकुर्वाणाः कृतहस्तपुटं प्रस्तुतस्तुतयः कथं कथमपि संक्रान्तशान्तिमातेनुः ।

१ वृद्धस्य ।

न कथं नु विधौ सलक्ष्मणे विधुपुत्रोपि तथाविधोऽभूत् ॥
कलुषः स पुरा तदाश्रितो विमलोभूदिति किंतु विस्मयः॥४९॥

अथ मित्रैरनुज्ञातः पुरीं द्वारावतीं बलः ॥
ससुतः सस्नुषः प्रायात्परिपूर्णमनोरथः ॥ ५० ॥

अथ कदाचन नारदः सकौतुकमेक एव केशवः कथमनेककामिनीरेककालं रमयतीति निर्वर्णयितुकामः कमनीयरूपां द्वारकामासाद्य तत्र मूर्तमिव शिल्पकौशलं विश्वकर्मणो नवलक्षप्रासादमण्डितं पीतामृतमिव प्रकटितसौधरुचिविशेषं[1] चन्द्रमण्डलमिव सुधाधवलितं[2] सेवितविविधौषधमिव मुक्तामयं षोडशसहस्रान्तःपुरगर्भं यदुनन्दनसदनमासाद्य तत्र कस्याश्चिदन्तःपुरे दुर्वर्णभित्तिबहुलेपि सुवर्णाश्चिते क्वचन दिव्यभवने प्रियया सह पर्यङ्कमधिशयानं कल्पतरुमिव सुपर्णलोभनीयं[3] श्रीवत्सानपायिनं[4] कामधेनुमिव वृषानुरक्तभद्रानुरागिणं च चिन्तामणिमिव भुवनैकयोनिं सकलरुचिविषयं च सिद्धरसमिव रुक्मपरिभवानुकूलं[5] सुकृतसंचयमिव नरकध्वंसिनं विद्युत्पुञ्जमिव घनागमलभ्यं[6] ज्वलनमिव समित्प्रचण्डं सूर्यमिव यमोल्लासकरं[7] सुधाकरमिव रौहिणेयानुरागिणं[8] सुकुमारभावादसह्यं कुशेशयभावमपहाय विदर्भभुवः[9] पीताम्बरावृत-

१ प्रकटितः प्रकाशीकृतः सौधः अमृत सम्बन्धी रुचिविशेषः स्वादविशेषः येन पक्षे । प्रकाशीकृतः सौधरुचिविशेषः राजसदनकान्तिविशेषः यत्र । २ सुधा पीयूषं लेपनं च ।३ सुपर्णो गरुडः सुष्ठुपर्णैश्च लोभनीयं सुन्दरम् । ४ श्रीवत्सो लाञ्छनं गोवत्सश्च । ५ रुक्मं सुवर्णं रुक्मी रुक्मिणीबन्धुश्च। ६ घनागमः वर्षाकालः दृढज्ञानं च । ७ यमोल्लासः संयमप्रकाशः शमनोत्पत्तिः । ८ रौहिणेयो बुधो बलरामश्च । ९ विगता दर्भाः कुशा यस्याः सा चासौ भूस्तस्याः । पक्षे विदर्भनामदेशात् ।

कोमलोत्सङ्गमाश्रयता कमलयुगलेनेव निरवधिकरुचिसम्पादनाय मुहुर्मुहुः कमलाराधितेन कमलाकरनिरन्तरसेव्यतयार्थसिद्धकमल-सेव्यभावेन सारसप्रतिमतया लक्ष्मणाशयसंस्पर्शभाजा पुनर्भवरुचि-प्रकाशितसकलजगन्मोहनेनापि संसारभेषजेन पदयुगुलेन लोभनी-यं सकलोरुसेव्यतया प्रकटितनिरुपमभावेन हरिप्रतीकभाव-लब्धप्रसिद्धितया हरिभीरुकवेतण्डशुण्डादण्डमगणयता च स-क्थियुगुलेनोपशोभितं सर्गोपसंहारयोश्चतुर्दशभुवननिर्गमप्रवेशप्रदे-शद्वारेणेव नाभिगह्वरेण शोभमानं संततदानसंजातयशोमण्डल-मालाकलापैरिव मुक्ताहारैरालिङ्गितेन नीरसभद्राश्लिष्टेनापि सरस-भद्राश्लिष्टेन केतनेनापि विशालेन वक्षःस्थलेन रोचमानं निरन्तरप-लाशोत्क्रान्तिखेदापनोदाय पलाशशङ्कानास्पदं सकलागमशिरोम-णिरिति समाश्रयता कल्पतरुशाखायुगुलेनेव भुजयुगुलेन विद्योत-मानं सकलोत्तरतया परिणयसमयमिन्दिराकरीधराकरीणमसह-मानेनैव तत्क्षणमेव तत्पीडनाभिनिवेशिना करयुगुलेन विराजमा-नं द्विजराजलङ्घन..............सारविन्दलोभनीयेन वस्तुतः कम-लौज्ज्वल्यनिरन्तरग्राहितया समारोपिकमलकान्तेस्तेजस्विनाखिल सुन्दरपुरुषनयनयुगुलमात्रादुत्कृष्टेन नयनयुगुलेन देदीप्यमानं उ-द्वासितकर्णतया प्रसिद्धस्यापि निरवधिकरुचिसम्पादनमवलोक्य समुपजातानन्देन सहजरुचिशालिना नयनयुगुलेनालिङ्ग्यमानं क-र्णयुगुलं बिभ्राणं प्राचीनजन्मनि विष्वग्दिष्टमानं हिमकरकरपरि-भवरोषेण साम्प्रतमाननात्मनावस्थितं चन्द्रमसं विष्वगाक्रमता

१ सर्वोत्तमतया । २ आसमन्तात् ।

कलङ्केनेव श्मश्रुमण्डलेन मण्डितं सकलसुमनोविलक्षणमग्रुहरविरोधिकृतायशःप्रमार्जनकामनया तपोबलेन सकलसुमनोभिमतमधुहरमुखचुम्बनानुकूलचम्पककलिकयेव नासिकया विराजमानं अवचनीयवर्णाश्रयाल्ललाटमात्रदृष्टेन फालफलकेन विलसितं अपहृतशरणागतजनदुरितमालिन्येनेव कृष्णरूपतयाधिगतोर्ध्वस्थितिना कुटिलजननिग्रहाय कौटिल्यमप्यंशतो दर्शयता केशकलापेन परवन्तं भगवन्तं मुकुन्दं सविग्रहमिव निजतपःफलमद्राक्षीत् ।

सत्वरं हरिरुत्थाय निवेश्य स्वासने मुनिम् ॥
आराध्य विधिवन्मूर्ध्ना पादोदकमदीधरत् ॥ ५१ ॥
शान्तकामो भवानीदृक् सुलभः संयमी कथम् ॥
तथापि ग्रहसक्तिर्नो गोत्रजैकतपःफलम् ॥ ५२ ॥

तदनु गृहीतव्यूहं विधेयविषयनियोगेनेत्यमृतासारसरसां गिरमुदीरयन्तं भगवन्तं नारदः प्रत्यवादीत् ।

विधेयमपरं नैव पश्यामस्त्वां विना हरे ॥
यत्सम्प्रति कृतार्थोहं जातो लाभात्तवाद्भुतम् ॥ ५३ ॥

एवमभिधाय पुनरनुपदमेवान्यस्याः सदनमासेदुषि तपस्विनि ।

अयि प्रिये पद्मिनि कीदृशोपि हरौ तवास्ति प्रणयानुबन्धः ॥
नश्यत्यमर्षस्तव पादवातादमुं प्रियानुग्रहमेव वेत्ति ॥ ५४ ॥
एवमाश्वासयन् कान्तां केलीकलहकोपिनीम् ॥
अजानान इवापृच्छत् स्वागतं नारदं हरिः ॥ ५५ ॥

---

१ युक्तम् । २ केलीकलहः प्रणयकलहः ।

नारदस्ततोपि तूष्णीमुत्थाय पुनरन्यस्याः सदनमासेदिवान् । तत्र च ।

तातात्म्बदुर्लभमिदं फलमन्यबालैः
संगोप्यदत्तममृतप्रतिमं तवैव ॥
दैवाहन्तं न परिपश्यतु बालकोन्यो
येन्ये पुनर्गुडयुता यदि ते प्रदेयाः ॥ ९६ ॥

लालयन्तं शिशूनेवं वचनैर्वञ्चनापरैः ॥
दृष्ट्वा हरिमथान्यस्याः सदनं मुनिरभ्यगात् ॥९७॥

एवं प्रतिनिकेतनं विलक्षणव्यापारानुरागिणमदृष्टपूर्वमिव स्वागतकुशलप्रश्नयोगादिभिरभिनन्दयन्तं मुकुन्दमन्तिमान्तःपुरप्रदेशे परिज्ञाताकलङ्कनिखिलेशव्याप्तिवैभवः प्रहसन्नेवमवादीत् ।

विश्वेन्द्रजालैर्जनमोहनं ते तवाद्भुतं किंतु विशेष एषः ॥
मायाविधानं तु यदत्र पिच्छं तदर्धचन्द्राविषयं प्रतीमः ९८॥

नारदः स निगद्यैवं मुकुन्देनानुमोदितः ॥
प्रययौ विस्मितस्तस्य योगमायानुभावितः ॥ ९९ ॥

तदनु विधिनिषेधागोचरपदो निखिलदुरितदौर्गत्यदूरीकरणनिपुणमहिमनामापि रमारमणः सदाचारस्य सर्वतोभ्यर्हणीयत्वमवश्यविधेयत्वं च लोकेषु भृशमतिशयेन विशदयन्नुषासि प्राणप्रियप्रेयसीप्रेमगाढानुलिङ्गनसुखमप्यगणयन्नाशु समुत्थाय कृतप्राभातिकसकलमङ्गलविधिर्यथाविधि सम्पाद्य च स्नानदानाध्ययनाच्युतार्चनानलाराधनादि निखिलविधिबोधितकर्मकलापमात्मत-

---

१ प्रतिगृहम् । २ प्रकाशयन् ।

न्त्रोपि सभ्यलोकराजतन्त्रसरणिमनुवर्तमानस्तदनुपदमेव स्यन्दनमधिरुह्य कतिपयैरनुचरैः सह समुद्यन्मित्राप्तवर्गो राजविराजितां संसदमनेकामात्यसचिववृष्णिवीरसभ्यजनविभ्राजितां सुवर्णाञ्चितामतोऽसम्भावितदुर्वर्णां सुधर्माधिकशोभातिशयामनुप्रविश्य शनैःशनैराश्रितसङ्केतितानर्घ्यश्रीविलासितमणिमयासनो यावत्प्राड्विवाकमतानुरोधेन क्षणं कौतुकोक्तिभिः क्षणं राजतन्त्रानुगतसामाद्युपन्यासैः क्षणं नटनर्तक्यादिविहितगीतश्रवणकुतूहलैः क्षणं ग्रीवान्दोलनविशेषेणैव कार्यविशेषैः स्वानुमत्यननुमत्यभिव्यक्तीकरणैः क्षणं ब्राह्मणाशिषामनन्यभावेन शिरसोत्तंसीकरणैः समयं गमयति स्म । तावदेव जरासन्धवितीर्णविपद्भावभूपालप्रेषितं कंचन दौवारिकैः सभायामनुप्रवेशितमवलोक्य तन्मुखादेव तदीयमवगत्य वृत्तं तत्सुखोदर्कचिन्तनसमसमयमेव यदृच्छागतं तमृषिवरं नारदमवलोक्य ससम्भ्रममुत्थाय विधिवदभ्यर्च्य त्रिजगदकुण्ठपर्यटनतया निखिलमप्यशङ्कमभिजानते भवते पाण्डवचिकीर्षितं कीदृगस्ति संसम्प्रतीति विज्ञायते न वेति संशयप्रश्नावकाश इत्युपबृंहितात्तस्मादेव समाकर्ण्य राजसूयाध्वरोद्योगं धर्मराजस्य सर्वविदपि लोकदृगनुसारेण कार्यद्वयाकुलतामभिनयन्नुद्धवमेव किमत्र करणीयं प्रथमं येनाक्लिष्टमिष्टं सर्वेषामविषमं भवेदिति निर्णयं समयोजयत् । स च पूर्वोत्तरानुसंधानबुद्धिरुद्धवोपि भगवदिङ्गितमवगत्य राजकार्यतन्त्रानुसरणिमपि निपुणमुद्भाव्य धर्मराजक्रतु-

---

१ दुर्वर्णा नीचजनाः । २ देवसभा ।

राजानुकूलगतिभिरेव भवितव्यं भवद्भिः प्रथममखिलैस्तत एवाभयार्थसिद्धिरर्थसिद्धैवाक्लिष्टा भविष्यतीति निर्णयवाचं लब्धवर्णाभियुक्तां युक्तिनिचयैरवोचत् । तदनु भगवानपि तदुद्धवनिर्णयोक्तिदत्तचित्तः सर्ववित्तमः सपद्येवानवद्यराजसूयेन यियक्षमाणः सादरमजातशत्रुर्द्रष्टव्य इति सर्वाननुज्ञाप्य स्वयं सह पुत्रैर्मित्रैः कलत्रैराप्तवर्गैश्च परमानन्देन कतिपयैरहोभिस्तदध्वोपगतदेशराजोपनीतान् ससत्कारोपानयनादीनादरेणाङ्गीकुर्वाणः सुपर्वाधिकश्रियमिन्द्रप्रस्थमुपस्थितराजसूयमखराजकौतुकमभ्यागमत् । पाण्डवा अपि समागतं भगवन्तमपारकृतवन्तमाश्राव्य प्रेमसम्भृतमनसः सह महिषीभिरतिहर्षात्षष्ठमात्मीयप्राणमिवाक्षय्यकुलधनमिव सकलाङ्गदेवतासहितमिव चिकीर्षितयागप्रधानदैवतमणिमाद्यष्टविभूतिपरिवृतमिव धनदं पृथिव्याद्यष्टमूर्तिपरिवेष्टितमिव शशिशेखरं लोकपालमात्राष्टकवलयितामिव राजन्यतेजःपुञ्जमष्टमहासिद्धिपरिवृतामिव सिद्धमन्त्रादिदेवतां पद्माद्यष्टविधसौन्दर्यनिधिसहितसदनमिव मुकुन्दाभिधलावण्यनिधिनवरत्नमालामध्यगतामिवेन्द्रनीलनायकमणिं रमणीरमणीयपार्श्वभागं माधवं प्रत्युद्गम्य परिरम्भकुशलानुयोगादिभिरभिनन्द्य सानन्दमानन्देन श्रीगोविन्दं निजभवनं समानयन् । तदनु पृथापि सादरं भातृपुत्रसमागमनहर्षिता यथार्हमुपचारैरनेकविधैर्निजधामानि सुखमवासयत् ।

अवसन्संसदं राजा मयमायाविनिर्मिताम् ॥
युधिष्ठिरोभ्यर्थयत प्रश्रयावनतो हरिम् ॥ ६० ॥
राजसूयेन यक्ष्ये त्वां क्रतुराजेन माधव ॥

अनुजानीहि मामर्हों[1] यदि स्यामस्य कर्मणः ॥ ६१ ॥

एवं धर्मर्द्धिकारिणीमजातशत्रुवाणीमाकर्ण्य भगवानरविन्दाक्षः सक्षेममेवमवादीत् ।

वरिस्त्वमस्य हि बुधैः पदमुच्चमेव
प्राप्तः स्थिरो भवसि सोमरसस्य[3] पात्रम् ॥
षण्डश्चलो नियतनीचपदाधिवासो
दुष्टग्रहाक्रमकुलो न भवादृशोऽन्यः[4] ॥ ६२ ॥

अपि तु ।

जगत्कुवलयौत्सुक्ये भवत्साहाय्यतेजासि ॥
कल्याणममितं यत्स्यात्तत्पश्यामीष्टसाधनम् ॥ ६३ ॥

तदनु युधिष्ठिरोपि भगवदनुमोदनमुदितश्चतुरः[5] स्वयं चतुरः सहोदरांश्चतुर्भुजवचनेन चतुर्दिग्विजयाय युगपदेव प्रस्थापयामास। तेपि कियता समयेन योगिन इव विजिताशा अनतिचिरोषिताध्ययना इव गुरवे कनकोच्चयं समर्प्य प्रमदाश्रिता बभूवुः ।

पाण्डवैर्न पराभूतिर्मागधायार्पितेत्यथो[6] ॥
खिन्नो हरिर्व्यधाच्चित्रं तत्प्राणहरणे मतिम् ॥ ६४ ॥
वाडवाकृतिमास्थाय[7] भीमार्जुनजनार्दनाः ॥
ग्रसनायाभ्ययुस्तस्य मिलिताः परवाहिनीः ॥ ६५ ॥

एवमुपगम्य जरासन्धमशमनोद्युक्तमालक्ष्येत्थमातिथय इव ननाथुः ।

---

१ योग्यः । २ ज्ञाता । ३ सोमवल्ल्या रसः । पक्षे चन्द्रः । ४ अन्यः बुधनामाग्रहः । ५ चतुःसंख्याकान् । ६ जरासन्धाय । ७ ब्राह्मणाकृतिम् ।

जराकलितगात्रं त्वां दुर्गता मार्गणा वयम् ॥
संप्राप्ता निवृतिः स्यान्नो जीवनग्रहणादपि ॥ ६६ ॥

एवं सकपटमस्फुटपदमभिदधाना एते कलहलालसा राजन्यकुलजन्या भान्ति न पुनर्द्विजवंशालंकारिण इति संदिह्यमानस्तन्निर्णयाय स्वयमपि सकैतवमेव वचनमुच्चारयांचकार ।

के यूयमेवमुदकाशनभैक्ष्यभङ्ग्या
प्राणार्थिनः कपटभूसुरभावभाजः ॥
आत्मप्रकाशविरहात्पुरपुंसि वामा-
चाराश्रिता न किमु भीरव एव यूयम् ॥ ६७ ॥

श्रुत्वैवमनल्पपरिवादजल्पितमल्पधियो जरासन्धस्यैवमवधारितप्रकृतकार्यानुसंधानो मधुसूदनोपि दृढतरमगूढमवादीत् ।

अहं तवारिः कृष्णः स भीमश्चायं धनञ्जयः ॥
तृणतालम्भिनो दग्धुं जातास्त्रेताग्नितेजसः ॥ ६८ ॥
एवमुक्तिं गभीरार्थां श्रुत्वा कृष्णस्य मागधः ॥
विहस्यैवमथोवाच हस्तताडनपूर्वकम् ॥ ६९ ॥

आस्तां जातु न दारकद्वयमिदं पुंसा परेणार्दितं
युक्तं वायुसखो भवानिति रिपुप्रध्वंसनोद्यद्यशाः ॥
वारान् षष्टिगुणान्हरे युधि मम प्रभ्रश्यतस्तेनिला-
दाशां लङ्घनजाङ्घिकत्वमपरः को वानुकर्तुं क्षमः ॥७० ॥

एवं व्याजस्तुतिभङ्गीमङ्गीकुर्वाणं मगधमतिरोषहासं मधुहैवमवादीत् ।

---

१ मधुहा कृष्णः ।

सकलप्रभुस्तुतिवचोविषयो ननु मागधो भवसि पूर्णगुणः ॥
वचनीय एव तव वाग्विभवः फलमन्यथा स्तवनरीतिरियम् ७१॥

मागधोप्यच्युतकृतसोल्लुण्ठनप्रशंसाभासेन दूयमानमानसः पुनरेवमवादीत् ।

या मार्गणापातभयातुराणां स्तुतिः प्रणीता रसिकैकवेद्या ॥
सन्मार्गधेनास्य रहस्यवेत्ता गोपाल इत्यद्भुतमुद्गतं नः ॥ ७२ ॥

एवमुत्तरोत्तरं विपुलार्थया चतुरोक्तिव्रततिलतयैव कंचित्कालमतिलङ्घ्य कुतूहललालसा वयमित्यलमनल्पवागाडम्बरेणेति निवेदितस्वाशयांस्तानेतान् मगधोप्यनुकूलमेवमवोचत् ।

न कान्दिशीकस्य मुहुस्तवास्तु तव क्षमं नाक्षमबाधनं नः ॥
धनंजयस्तिष्ठतु दुग्धकण्ठो भीमेन भूयात्कलिविभ्रमो नः॥७३॥

एवमभिधाय वृकोदराय गदामेकां प्रदाय स्वयमपि गदामन्यां बिभ्राणः सकौतुकमुत्खातिनीभूमिरिति नगरपरिसरमेव समीकभुवं मन्वानो नगरतस्तैः सहैव तदानीमेव निर्गत्य अनुत्खातभूमिमाससाद । तत्र च तावेतावामयाविनाविव गदाघातकदर्थितशरीरिणौ पिशुनाविव रन्ध्रान्वेषिणौ शिवाभेदभाजाविव क्ष्वेलानुबद्धकण्ठौ सुभद्राचित्राङ्गदाशयाविव विजयाभिकाङ्क्षिणौ चतुर्मुखभुजस्तम्भाविव सुरसुन्दरीलोभनीयं कमपि विग्रहमपूर्वमजनिषताम् ।

अवर्धत ततो भीमः पातयन् मगधाधिपम् ॥
स्थाने वृकोदरोत्कर्षस्तदुन्मेषविनाशनात् ॥ ७४ ॥

---

१ निन्दायुक्तम् । २ स्तुतिपाठकेन जरासन्धेन च । ३ भीत्वा पलायितस्य । ४ युद्धस्थलम् । ५ रोगिणौ । ६ गदा आयुधं गदो रोगश्च । ७ क्ष्वेलं गरलं अतिशयेन च । ८ अर्जुनो जयश्च । ९ विग्रहं युद्धं शरीरं च ।

जरासन्धात्यये जाते मन्दे च परतेजासि ॥
सम्प्राप्तो वातभूदोषोत्कर्षः केन निवार्यताम् ॥ ७५ ॥

तदनु यदुनन्दनो घनकृपाघनोर्जुनेन वृकोदरमालिङ्ग्य समालम्बितराजनीतिसदनुबन्धो जरासन्धात्मजं सहदेवाभिधानं पुनस्तद्राज्ये समभिषिच्य तेन नन्दीकृतानशेषानपि भूभुजः कारातो विमोच्य तत्तन्नृपासनेषु यथाविधि सत्कारपूर्वकं यथापुरं प्रतिष्ठाप्य च परिपूर्णमनोरथैः सह पार्थभीमाभ्यां हरिप्रस्थमुपागमत् ।

अथ धर्मात्मजं नत्वा भीमार्जुनजनार्दनाः ॥
न्यवेदयञ्जरासन्धवधमापादमस्तकम् ॥ ७६ ॥

अजातशत्रुरपि तदीयवचनचन्द्रालोकवर्धितया मध्यशरीरमपरिमाय नयनमार्गनिरर्गलितप्रमोदं सागरस्रोतसेव बाष्पधारया प्रणम्रानेतानभिषिच्य तत्संसिक्ततयेव द्विगुणीकृतानन्दं यदुनन्दनमेवमवादीत् ।

गच्छत्यहिभये कृष्णपक्षपातान्मखार्थितात् ॥
कथं सुमनसां न स्यात्सोमपानमहोत्सवः ॥ ७७ ॥

अनन्तगुणभारस्य सेवकानां तथापि नः ॥
वृषग्रहोषिणां किंनु सप्ततन्त्वाप्तिरद्भुता ॥ ७८ ॥

एतमुत्तमश्लोकमुपश्लोका तदनुज्ञयासम्भृताध्वरसम्भारो धर्मराजः कर्तुं क्रतुराजमुपाक्रमत । तत्र च ।

---

१ कारागृहात् । २ वृत्रासुरभये । पक्षे दुष्टभये । ३ देवानां साधूनाम् । ४ गोस्थानस्थितानाम् पक्षे धर्मग्राहिणाम् ।

नासन्नध्वरभूमयः परमिह स्वाहारवैराश्रिता-
श्चक्रामन्त्रभ्रेष्पपदं(?) नचैकमभवद्रूपेष्वधीनेष्वपि
........................................ ॥
प्रायश्चित्त विपन्नकर्मसुकरं शून्यं दरिद्रेष्वपि ॥७९॥

समनन्तरमजातशत्रौ पारिषदाराधनाय सम्भृतसम्भारेकतमः प्रथमं पूजाभाजनमिति संशयालौ सहदेवः सहसा सकलसभाजन-समाजभाजनं वचनमेवमुदीरयामास ।

इन्द्रः[1] पुरा क्रतुभुजामधिपः समीक्ष्य
गोत्रोद्धृतिं च्युतमदः शरणं यमेव ॥
भेजे तमेव पुरुषोत्तममन्तरेण
पूज्यः परोस्तु कतमः क्रतुकारिणां नः ॥ ८० ॥

एवंसोपपत्तिकममृतधारामधुरां सहदेवगिरमाकर्ण्य सर्वे सभास्तारा[2]: समुद्गतानन्दविस्तारास्तारं[3] युगपदेवमवादिषुः ।

वर्धस्व साधु सहदेव पुन........
न त्वं शिशुर्गुरुरुदारधियां बुधानाम् ॥
नासत्यतां[4] नवभुवि प्रकटीकृताद्य
सत्योक्तिभिः कृतधियामपि दुर्वचोभिः ॥ ८१ ॥
युधिष्ठिरस्तमेवार्थे परमार्थं विचिन्तयन् ॥
आरराध हरिं गन्धकुसुमाभरणाम्बरैः ॥ ८२ ॥

तदनु शिशुपालो वनमालिनः प्रथमसपर्यापर्यायमभ्यर्हितं च सभ्यग्वरैरनुवेलमवलोक्य कल्पान्तकालानल इव जाज्वल्यमानान्त-रस्मदन्तरे सरोषमेवमभाषत ।

---

१ इन्द्रः । २ सभासदाः । ३ उच्चैःस्वरम् । ४ नासत्यता अश्विनीकुमारत्वम् ।

पुण्येषु सत्सु बहुराजकुलेष्वमीषु
गोबालकः प्रथमपूजनपात्रमासीत् ॥
नैषा किलार्पेचितिरस्य परं खलस्य
पूज्यार्हणव्यतिगमादपि यत्परेषाम् ॥ ८३ ॥

एवं भूरितरश्रुतिकटविकटपटुतरं रटन्तमेनमतिरोषणः पुरुषोत्तमस्तेन सह समरसाहसे कृतोद्यमानखिलानपि सहदेवभीमपार्थप्रमुखानाप्तान्निवार्य स्वयमेव सुदर्शनेन सलीलमपास्तमस्तकं विदधे।

सुदर्शनेनापरिपुः सदिष्टो गदावलम्बी स्वयमेव भूत्वा ॥
यो विच्युतं निग्रहतः करोति माया धवः केन स वक्तुमर्हः ८४॥

तदनु निर्वर्तितावभृथं परिपूर्णमनोरथमनेकरथियूथैः सनाथीकृतपार्श्वपथं विविधातोद्यवादित्रतौर्यत्रिकप्रचुरनटनर्तकीगीतप्रबन्धमागधकृतास्तोकयशस्तोमस्तवमस्तमितदैन्यशब्दमब्देगभीरभेरीझङ्कारकरम्बितं निजपुरं प्राप्य समागताननेकदेशाधिपतीन्विविधार्हणसमर्पणपूर्वकं प्रस्थाप्य सकलर्त्विग्वरप्रमुखेभ्यः समभिलषितदानेन परिपूर्णमनोरथेभ्यः सकाशान्निष्कलङ्कफलप्रसविनीराशिषो विशेषणेन समुपसंगृह्य सभायामुपतिष्ठन्तं चतुर्भिर्भुजैरिव चतुर्भिर्बन्धुभिरुपशोभितं युधिष्ठिरमजातशत्रुं पवित्रतरकीर्तिमयधवलकायं मयनिर्मितायां सुधर्माधिकसुषमायां चतुरतरधियोपि दुर्योधनस्य जलस्थलविपर्यासभ्रमसम्पादिकायां जयकेतुनिकायमण्डितायामपरदारकासभायामिव भास्वरायां सभायामनर्घ्यपरमासनमुपतिष्ठन्तं युधिष्ठिरमवलोक्य दिष्ट्यानवशिष्टकृत्यकृत्योप्यच्युतस्तत्प्रीतये कतिपयवासरान्सदारमाणैः सदारमणीयमनणीयः शोभास्थानमानन्देन हरिप्रस्थमवतस्थे ।

१ पूजा । २ अब्दा मेघाः । ३ देवसभाया अपि विशेषाकान्तिर्यस्या एतादृशी तस्यां । ४ सदारेषु श्रेष्ठः ।

यस्मिञ्छंकरदारसौरभजरीञ्जृम्भत्कटाक्षच्छटा-
पाताः कल्पलतावितानसुमनोगुम्फप्रियंभावुकाः ।
तस्यासौ नवकालिदासविदुषः काव्यामृते पञ्चम-
श्चम्पूनामनि धीमतां कृतसमुल्लासो विलासोगमत् ॥ ५ ॥

इतिश्रीमद्भागवतचम्पूकाव्ये कालिदासकृते पञ्चमो विलासनामस्तबकः ।

---

## षष्ठः स्तबकः ।

श्रीशं वन्दे ।

निर्व्यूढं मयमायया पशुपतेराराधितस्याज्ञया
सौभाख्यं नगरं सुरासुरगणैर्निर्भेद्यमस्थावरम् ॥
विष्वक् द्वारवतीं रुरोध सहसा शाल्वः समासाद्य त-
न्मत्वारन्ध्रमुपस्थितं मुररिपोरासन्नतौवैधुरीम् ॥ १ ॥

तदेवं विमानमिव गगनसञ्चारलीलं कामुकमन इव सकलाशाल-ङ्घनजङ्घालं सौभमतिशयानं जलधरमिव शिलावर्षिणं पाकशासनिमिव जयन्तं मायाजालमिव रजसा तमसा च सकलजनानन्धीकुर्वाणं कृपणमिव मार्गणान्निरस्यन्तं शाल्वपल्वलमिवाविलीकुर्वन्तं द्वारकाप्रान्तभागेतिगर्वेणोद्वेलमाचान्तमुपलभ्य नितान्तरोषणः प्रद्युम्नः सहंसा सह सामन्दिभिः केसरीव कन्दरान्तरान्नगरोदरान्निरगात् ।

---

१ समतन्तः । २ विघ्नम् । ३ वियोगम् । ४ आशा दिशः इच्छा च । ४ मार्गणान् बाणान् कृपणांश्च ।

ततः प्रववृते युद्धं शाल्वप्रद्युम्नसेनयोः ॥
तथापि समपद्यन्त त्यक्तसंख्यास्तयोर्भटाः[1] ॥ २ ॥

तत्र च ।

मार्गे शाल्वपुरस्कृतान्फलभृतश्छित्वा द्रुतं मार्गणा-
न्नादायार्जितभूरिलोभजमुदं प्रद्युम्नबाणस्ततः ॥

हा कष्टं गुरुवंशजेन हि पकरप्राणा शब्दानत्यजा(?)
दौष्कर्मं विहितं मयेति शरधौ लज्जां ममज्जाश्रितः ॥३॥

तदनु विदिताखिलद्वारकोपस्थितोदन्तं हरिमपि हरिप्रस्थादाक्षि-प्रमेव समागतमभ्यमित्रीणमवलोक्य शाल्व एवमभिदधे । अये कथमनात्मविदितेयं यदुकुलकलङ्कस्य कलहकावरस्य भवतः ।

युद्धात्पलायितुमये किमु मागधीय-
माचार्यकं किमपि मे युधि शाल्वकस्य ॥
कन्या समर्हतितरां शरणं प्रयातः
कारुण्यपात्रमसुसंन्यसदं परस्य(?) ॥ ४ ॥

एवंवादिनं शाल्वं भगवानवादीत् । शृणु रे मूर्ख ।

भवादृक् चपलोन्मेषः प्रकृत्या क्षणनश्वरः ॥
समूलविलयोप्यस्य प्रबलाशुगघट्टनात् ॥ ५ ॥

एवं परस्परपरिवादिनोरनयोर्भवति महति सम्प्रहारे शाल्व-मायाविनिर्मितः कोपि संदेशहरो देवकतनयायापहितोहमिति प्रणम्य मुररिपुमवादीत् ।

शाल्वेन वसुदेवस्ते पिता कृपणमुच्छ्वसन् ॥
क्वासि हा कृष्णकृष्णेति बद्धा पशुरिवाहृतः ॥६॥

एवंवादिनि दूते यदुपतिरतिदूयमानमानसः स्वगतमेवमचिन्तयत् ।

---

१ असंख्याताः ।

सति रामे कथं तात विपत्तिर्यदि वा तमः ॥
अलङ्घ्याजानकीपीडा ततः स्यात्सोपि दूरतः ॥७॥

प्रकाशम् । अयि त्रिजगन्महनीयपराक्रम नयनाभिराम राम कथमीदृशं प्रमोदमासादः ।

रामः पुरा पितृवचःपरिपालनेन
भेजे यशस्त्रिजगतीं त्रिदशैर्दुरापम् ॥
रामश्चकार तनुपालनमप्ययं तु
तातस्य नेत्यहह कोयमकीर्तिजातः[1] ॥ ८ ॥

एवं वादिनि वासुदेवे शाल्वोपि कृत्रिमवसुदेवमग्रतः प्रदर्श्य निकृत्य च मूर्धानं सौभमविशत् ।

आलोक्यैवमनार्यकार्यसरणिं पाशात्कृतां दुर्दशां
दाशार्हस्य न तादृशी क्वचिदपि प्राप्ता पुराजन्मसु ॥
प्राप्ताकृत्रिमजानकी हननतः सौमित्रिमुच्छोंदया-
त्प्रागात्स्वा दिकनिष्ठशुगुगिरौ गुरुरिव नासौ तुलामर्हति(?) ९

शार्ङ्गहस्तालोचनदशृजैर्धैर्य
चिन्तछापि प्रश्रुतं यौगपद्यात् ॥
ज्ञात्वा विध्याध्यायतां दुर्दशां तां
शोभोयन्तः शार्ङ्गिणः कीदृगस्तु(?) ॥ १० ॥

तदनु योगच्छलेन तदिदमशेषं मृषा मन्वानो वृषावरजो[3] विषादमपहाय रोषधीषणो विद्वेषकषणाय सुदर्शनं प्राहिणोत् ।

ज्वालामालाकवलितमिदं चक्रमाक्रम्य सौभं
क्षोभं नीत्वा सरयमनयद्बन्धुरं सिन्धुसंगम् ॥
सत्यासत्याजितोस्यारिपुरपि वपुषा शीर्यता शौर्यतापैः
शूरे शौरौ गणेया गुणगणशरणे वारिणा वैरिणान्ताः[2] ११॥

१ अकीर्तिसमुदायः । २ सेवकैः पूज्यस्य । ३ बलरामानुजः ।

एवं सौभपतिवधं विधाय तदनुभाविनं परिवादमनल्पं जल्पन्तमल्पधियमतिभ्रान्तं दन्तवक्त्रमपि क्षणमात्रेणैव परत्रापि शाल्वमनुयायिनं विधाय सहर्षं दिविषत्सु कुसुमवर्षिषु नृत्यन्तीषु सुरसुन्दरीषु सानन्दो मुकुन्दः सकलामन्दमङ्गलतुन्दिलं निजमन्दिरमविन्दत । अथ बलरामोपि केनचित्कारणवशेनोपस्थितं कुरुपाण्डवसंगरक्षोभमध्यक्षतया वीक्षितुमक्षमस्तीर्थयात्रापदेशाद्भूपर्यटनमङ्गीकुर्वाणस्तत्र निमिषक्षेत्रे निमिषमात्रेणैव विचित्रचरित्रजातमृषिहर्षं निर्मायाचिरेणैव निजनगरमाससाद । एवमनेकविधविबुधहर्षदशौर्योत्कर्षं निर्माय सानन्दं विरहति मुकुन्दे ।

मित्रं हरेः कोपि सतीर्थ्यभावो दारिद्र्यसार्थी कृतनामधेयः ॥
कुचेल इत्यागमसारगोभूत्स्वरूपलाभोपचितप्रमोदः ॥ १२ ॥

स च कदाचित्सहधर्मचारिणीं दारिद्र्यनितान्ततान्तहृदयां सविनयमिदमवादीत् । अये भगवन्नगणितदारिद्र्यसमुद्रविविधविरावितविषयाभिलाष किमपि विज्ञापयितुकामां मां प्रतीपदर्शिनीति नाक्षेपेथाः ।

मित्रे तव श्रीदयितेपि कस्माद्दशाकृशानां भगवन्नशान्ता ॥
सामीप्यमुक्ताज्जगतीपतेः स्यात्कथं नु लाभः सुकृतोपि लक्ष्म्याः १३

मित्रश्रियः संक्रमणं विहाय भवेत्र जातु द्विजराजपुष्टिः ॥
इमानि सिद्धान्तवचांसि किंतु परिस्फुटादर्शनलभ्यतात्र॥ १४॥

तदवश्यं दृश्य एव दारिद्र्यविद्रावणाय श्रीमद्रमारमणो द्रागिति क्षुद्रेतराक्षरोपन्यासचतुरायां निजपदसेवनैकनिष्ठायां वसिष्ठदारोदारचरितायां निजदयितायामेवंवादिन्यां सन्यायमेवेदमनल्पजनदुर्लभसुदर्शनकरदर्शने इति मन्वानस्तद्वचनमन्वमोदत ।

---

१ यमलोके । २ दारिद्र्येणात्यन्तपीडितं हृदयं यस्या इत्यर्थः ।

वाचापराङ्मुखतया कलहो मिथोस्याः
प्राणप्रियावचनमान्यतया च तेने ॥
माध्यस्थवाप्यराचि शौरि दिदृक्षया तु
तस्याशयानुसरणेन सती द्वितीया ॥ १९ ॥

तदनन्तरमकुण्ठवैभववैकुण्ठदर्शनोत्कण्ठया प्रियावचःप्रचोदितः कुचेलश्चैलाञ्चलेन भगवदुपहाराय मुष्टिचतुष्टयमितान्पृथुकानावेष्ट्य वनमालिविलोकनातिलालसया द्वारकानगरमभ्यागमत् । तदन्तरेचिन्तयच्च । केयममरावतीमप्यतिशयाना द्वारवती क्व चेदं हरिगर्भतया सार्वभौमेनापि दुष्प्रवेशमन्तःपुरं क्व चेमे चतुराननमप्यर्धचन्द्रदानेन शान्तदर्पकं कुर्वाणा दौवारिकाः क्व चेदं साम्राज्यमुज्जृम्भमाणं त्रिजगन्नायकस्य यदुकुलशक्रमणेश्चक्रपाणेः क्व चाहमाच्छादितानच्छकच्चरपटच्चरः प्रलम्बकूर्चश्रेणिदरिद्रश्रोत्रियः कथमक्षुद्रवेशे वेश्मनि प्रवेशावकाशः कथं नाम कथंचन प्रविष्टमपि मां प्रत्यभिजानीयान्स्मरन्प्रागस्तोकसंस्तवप्रकारमिदानीं लक्ष्मीविलासपरवशाखिलेन्द्रियग्रामो दामोदरः । सर्वथा वितथमयमनोरथ एवाहमत्रागत्य भवामि किमिति ।

संचिन्तयन्निदमवाप महीसुरोयमावासमप्रति निवर्तित एव शौरेः॥
नैवाद्भुतं हरिकृपाविषये कथं नु जायेत वारणकृतव्यसनप्रकर्षः॥२०॥

एवमप्रतिहतगतिकमेवान्तरान्तरगृहमध्यमागतमवलोक्य द्विजराजमञ्जसातिजवेन भगवान्मित्रालोकविकसितमुखपुण्डरीको रुक्मिण्या रमण्या सह समवतीर्य पर्यङ्कतः प्रत्युद्गम्य परिरभ्य च कुचेलमपि तमतिप्रेम्णा निजपर्यङ्के न्यवेशयत् ।

वैदेहीपरिरम्भिणोलमुरसः संश्लेषकामान्सुखी
तस्मिन्नेव भवे भवेदिति पुरा यो वा निराचीकरत् ॥

---

१ यदुकुलाधिपस्य ।

सद्यस्ते न विदर्भजाकुचभरं संत्यज्य प्रेमास्पदं
संश्लिष्टस्य कुचेलकस्य कृतिनो गण्या न पुण्यावलिः १७
द्विजराजं कृशं गाढमालिङ्ग्य रुचिनिर्भरम् ॥
कुर्वाणस्यास्य मित्रत्वमनन्यसदृशं हरेः ॥ १८ ॥
पङ्कं हरिप्रमदबाष्पजलाप्लुतस्य
तस्याखिलं चिरधृतं विलयं प्रपेदे ॥
चित्रं यदुत्तरममुष्य न पङ्कलेपः
स्थानेथ वा कुपदयोगकथापि नास्य ॥१९॥

ततश्च ।

त्रिविक्रमोयं विधिधौतपादपद्मः पुरा संमर्देपारवश्यात् ॥
द्राग् ब्रह्मणामुष्य गृहाश्रितस्य न्यषिश्चन्दङ्घ्री विधिरित्यवेत्य २०
नतेन शिरसा शौरिः सलिलं तदुपाददे ॥
मूर्धाभिषिक्ततारूढा तथाप्यस्य न लौकिकी[2] ॥ २१ ॥

ततश्च ।

तस्य चक्रधरश्चक्रे दिव्यचन्दनचर्चनम् ॥
तेन सामोदता[1] युक्ता विचित्रो वासनाक्षयः ॥ २२ ॥

एवं ।

विविधैरुपचारैस्तमभ्यर्च्य मधुसूदनः ॥
श्रमानुत्यै प्रियां तालवृन्तकर्मण्ययोजयत् ॥ २३ ॥
व्यजनानिलेन सहजानुकम्पना
समपूजयद्द्विजमसौ विदर्भजा ॥
कथमेतदस्तु यदि वा न विस्मयो
द्विजराज एष दयया च सा रमा ॥ २४ ॥

तदनु कुशलमन्वयुङ्क्त ।

---

१ आनन्दयुक्तत्वात् । २ 'यौगिकी'ति वा पाठः ।

प्रत्यागतो गुरुकुलात्किमुपर्यणैषी-
त्कान्तां सखे सुसदृशीं प्रसमीक्ष्य नो वा ॥
आदावभूमसदृशीमुपयम्य मोहा-
द्वह्वीर्यथारुचि ततः कलयन्ति केपि ॥ २५ ॥

एवमन्यापदेशेन परिहसता भगवताहमेव समाक्षिप्तेत्यवगत्य चतुरवाणी रुक्मिणी द्विजमणिं पुरस्कृत्य स्वयमप्येवमवादीत् । अयि भो द्विजराज नितान्तमननुरूपघटनाधुरंधरस्य विधिहतकस्य स्वभावमवबुध्यैव युक्तमुक्तमेतदार्यपुत्रेण । तथाहि ।

उत्कण्ठितैर्भूमिभृतां सहस्रैः कक्ष्यामहंपूर्विकया प्रवृत्तैः ॥
गोपेन राज्ञस्तनयां कदाचिच्चौर्येण दैवं घटयेत्प्रतीपम् ॥२६॥

भगवानपि तद्वाग्भङ्गीमङ्गीकृत्येङ्गितज्ञः सलीलमेव सच्छलमेवमवोचत् । अयि भो तपस्विशिरोमणे सकललोकस्वभावममुमप्यवधारयितुं भवान्मत्कृतमन्वमोदताम् ।

कन्यामसुन्दरतनूमपि रुक्मिमुख्याः
सम्बन्धिनस्त्विति परे तु भजन्तु लोभात् ॥
प्रद्युम्नलाभमपहाय न कश्चिदस्याः
सम्पर्कतः सुखविशेष इति प्रतीमः ॥ २७ ॥

भगवत्यपि तादृशीं वनमालिनो वचनशैलीमाकलय्य तादृशसरण्यैव वाण्या पुनः प्रत्यवादीत् । अयि भो तपस्विशिरोललाम न केवलामिदमेवं पुरुषाणां योषितामप्येष स्वभाव इति विभावयतु भवान् ।

जगती विभृता मृषा भजन्ती पुरुषं कंचन वस्तुतो भजन्ते ॥
विषयोपनते हि मात्रसौख्यं फलमस्योभयभक्तमात्रतुष्टिः २८॥

तदनु यदुनन्दनः पुनरपि रुक्मिणीवदनमवलोक्य वस्तुगतिमुपपादयान्निव सकैतवमेवमवादीत् ।

बालिशामन्यजन्मानं यानं संवर्धयेद्वधूः ॥
भोगलौल्यमलीकं तां सुन्दरस्य प्रदिच्छतः ॥ २९ ॥

सव्याजमेव वदतो भगवतो रुक्मिण्यपि वदनकमलमवलोक्य सलीलं तादृशमेव प्रत्युवाच । आर्यपुत्र युक्तमुक्तमत्र भवता भवता यन्न केवलं कमनीयपुरुषस्य विषमयोषिदनुषङ्गजो विषादः किंतु कामिनीनामपि सुरूपाणामतनुरूपवल्लवसंलाभेन साम्प्रतमनुतापः ।

शमितोपि दृशा कामः पुनरुत्पद्यते यतः ॥
साचेद्वृषविवर्तास्य कीदृशी जन्मसाफली ॥ ३० ॥

एवं ।

परस्परपरीहासस्मेराननसरोजयोः ॥
स तयोः कलयँल्लीलां श्रेयसां भूयसां निधिः ॥ ३१ ॥

एवं क्षणमेकमधोक्षजः प्रेयसीपरिहाससुखमतुलं कुचेलाय दर्शयन्स्वयमप्यनुभूय पूर्ववद्व्याजमेव व्यावहारिकं वक्तुमारभत ।

आलोक्याङ्गनचारिणो मृगपशून् रोमन्थमभ्यस्यतो
मादृक्षैरनवेक्ष्य मन्द्रमधुरं किं भक्ष्यमश्नन्त्यमी ॥
इत्येवं परिपृच्छतोपि कृपणं भक्ष्याशयाबालिशा-
न्साकाङ्क्षं परिरभ्य भूसुरमणे कच्चित्सुखं प्राप्यते ॥३२॥

अयि स्मरसि ब्रह्मन्निति भृशं शैशवदशायामाम्नायाभ्यसनाय गुरुकुले निवासं तत्र च निम्नोन्नतकेलिहासपरिहासरसाविर्भावानुभवं गुरुदारकृतानुशासनप्रकारं चापरमपि विविधं यथासमयसमुपगतम् । निरुक्तनिजवासेन सस्मेरं प्रियाननमन्वीक्ष्य साशङ्कं ।

इदं न किं वेत्ति भवान् वनान्ते गाश्चारयिष्यन्नवदीत्सहर्षम् ।
शुश्रूषमाणस्य गुरूननार्यकार्यावलम्बोपि न दूषणाय ॥३३॥

एवं भगवतानार्यं कार्यं लोकसद्व्यवहारेणार्यतांप्रापितमित्यवगत्य किञ्चित्सपरिहाससरणीं रुक्मिणी वाणीमफाणीत् ।

गुरुधेनोः स्वधेनोर्वा तोषणं नैव दूषणम् ॥
वस्तुतः परधेनूनां रक्षणं नार्यलक्षणम् ॥ ३४ ॥

भगवांस्तदनु प्रेयसीवचसि प्रतिवचनमनधिगच्छन्निवानुत्वरयन्वयस्य कश्चिदुपनीतः सख्युर्ममोपादेयोपहार इति सहासं वदन्नेव कक्षापिहितं जीर्णचेलाञ्चलग्रन्थिं निजकरेणाकृष्य किमिदमित्युन्मोचयित्वा पृथुकानालक्ष्य लक्षितसर्वस्वार्पणो दयार्णवो नारायणस्तूर्णमेकां पृथुकमुष्टिं नित्यतुष्टिसुखोप्यखादीत् ।

अमृतादपि तेषु माधुरी पृथुकेष्वित्यवगम्यते यतः ॥
अमृतं लभतेस्य किङ्करः पृथुकास्तु प्रिययापि दुर्लभाः ॥३५॥
पुनर्जिघृक्षुः पृथुकान्मुरारिं विदर्भजा प्राह निवारयन्ती ॥
देयाथ ते सर्वविचारसम्पद्गतिर्भवेदग्निसखस्य कीदृक् ॥३६॥

कुचेलोपि निश्चलानन्दतुन्दिलः पुरन्दरप्रासाद इव मुकुन्दमन्दिरे तामतिशोभिनीं रजनीमपनीय परेद्युरुद्यन्ति प्रद्योतनेपि मित्रधनमनधिगच्छन्नपि तत्समागममेव भूरिलाभं मन्वानस्तमन्वापृच्छ्य तत्राममन्वनुरञ्जितमुखो निजनिकेतनाभिमुखं ससुखातिशयमेवमयासीदचिन्तयच्च ।

असौ न दीनो मदभागिति स्म सञ्जीवनं भूरि दुरापमादात् ॥
सती गतिः स्यात्कथमन्यथा तु निर्वर्तिता चासुरसम्पदुच्चा ॥३७॥

एवं चिन्तयत्येव निजसदनदेशमासाद्य किमिदं कस्येदमपरमिव पुरन्दरमन्दिरमिति तत्त्वानभिज्ञतया परिभ्रमन्कुचेलः सह सखीभिः प्रत्युद्गतया सकरुणहरिवितीर्णया मूर्त्येव लक्ष्म्या प्रियया

---

१ बालकाश्चिपिश्च ।

प्रवेशितः सकलभोगाननुभवन्ननुभवनमानन्दबन्धुरसुखमध्युवास ।
अथ निजजनरक्षणगृहीतदीक्षः ।

वत्सापराधविधयाविहितापराधो
राधाभिधाव्यथितजातुवधूविधाता ॥
पुत्रीयते परमदादपि रिन्हलाख्य(?)
द्वीपायिपायफणितो रमणीमणीं ताम् ॥ ३८ ॥

अनन्तरं च तमेनं सिंहलद्वीपाधिपं विजयवर्माणं समुपजातयौवनाया दुहितुरनुवल्लभमनुपलभ्य दुदूयमानसं कमलासनः स्वप्नदशायामेवमुपदिष्टवान् ।

राजन्नारोधिकां कृत्वा राधिकां मुरवैरिणः ॥
निर्माणचातुरीं कुर्या मामिकां फलिनामिति ॥ ३९ ॥

विजयवर्मापि जयदेवसंपदां निदानं मत्वा दामोदरमाहूय महोत्सवमासाद्य राधिकां व्यतरत् । भगवानपि तामेतां सापरापविधिवितीर्णपूर्णपात्रीभूतामपि देवतामिव सौन्दर्यनिधेः इन्दुकलामिव वृषाकपिशिरःश्लाघनयोग्यां स्वरुचिप्रतिबन्धकतया कमलामभिमतां च देवसेनामिव सुकुमारभावलोभनीयां राधिकां विश्वकर्मनिर्मितं किमपि परिहसितकैलासमन्तः पुरं प्रवेश्य तया सममरमत् । तथा हि ।

कल्याणे विनिवेश्य जातु समये सख्या समुत्काण्ठिनं
केलीसद्मनि पञ्चसायककलातन्त्रं स्वतन्त्रं हरिम् ॥
द्वारोपान्तमनीनयन्नववधूं राधां कथंचिद्गिरां
पारैर्वञ्चनचातुरीपरिणतैर्मुग्धां विदग्धाङ्गनाम् ॥ ४० ॥
विनिर्ममे यत्तदविश्वकर्मा लीलागृहं तत्किमलक्षि राधे ॥

---

१ सेवाकारिणीम् ।

प्रयाम तत्रेष्टवरप्रदाना देवो मनोभूरपि सन्निधत्ते ॥ ४१ ॥
चलाम लीलासदनेत्रमुग्धे न शक्यतां नास्ति हरिः किलात्र ॥
किमप्यपूर्वं सुखमत्र लब्ध्वा स्मरिष्यसि त्वं हितसूचकां ताम् ४२॥
किं वर्ण्यते सौरभमस्य मन्ये हरेर्निवासं त्रिदिवं हि साक्षात् ॥
यतस्तदेतत्सुरतार्थमिष्टि सुहृज्जने नाचरतेव लभ्यम् ॥ ४३ ॥

एवमादिवञ्चनवचनवशेन कथंचन केलीमन्दिरालिन्दमानीतायां राधायां ।

सख्या स्यादपि संहिता किमु हितां बुध्येत वा वञ्चनां
तर्हिप्रत्यय एव जातु न भवेद्यद्वा प्रवीणा सखी ॥
मुग्धेयं यदि वा विधिर्हि बलवान् इत्यादि शङ्काङ्कुरा
मञ्जीरोज्ज्वलमञ्जुसिञ्जितरवैरस्तात्समस्ता हरेः ॥ ४४॥

अत्रान्तरे किमु बुधस्य मनोभवस्य
पाण्डित्यमुज्ज्वलमखण्डितमुज्जजृम्भे ॥
सर्वज्ञमाकलयतः पुरुषोत्तमस्य
मोहो महान्निजगुरोरपि येन तेन ॥ ४५ ॥

तथा हि ।

स्तम्भे पुरा यो हरिराविरासीत्स्तम्भोधुना तत्र हरौ चकासे ॥
कृतावताराननृहरेरितःप्राग् विलक्षणोयन्नृहरिस्तदेव ॥४६॥
पदाज्ञया स्यात्मलयस्तमीश आकस्मिकक्षोभमनीनयत्सः ॥
स्थाने यतोयं हरिणाप्यलङ्घ्यः स्मरप्रपञ्चप्रलयोपि भिन्नः ४७॥
विजृम्भितोभूत्प्रतिलोमहर्षस्तदामुरारे रिति नैव चित्रम् ॥
यदीदृशो जातु चिदङ्गनानां संगेषु हर्षो ननु भूतपूर्वः ॥४८॥
स्वेदाम्बुपूरः प्रससार शौरेरानर्गलस्तन्न विचित्रपात्रम् ॥
सार्द्रो विभुर्निर्व्यवधानमेव राधा परीलाभमियेष चित्रम्॥ ४९॥

समग्रवेदिन्यपि तत्र कृष्णे विवर्णता प्रादुरभूत्तदानीम् ॥
न ग्राम्यधर्मः प्रवणः कथनु भजेत वैवर्ण्यमनुत्तमोपि५०॥
अचलस्थितितः प्रचाल्यते न मया किंनु हरेः कथं यशः ॥
इति तं जगतीधरं स्मरस्त्रिजगद्व्यापिनमप्यकम्पयत् ॥५१॥
अनर्गलं नेत्रपथात्प्रवृत्ता यूनो मुकुन्दस्य तदास्रधारा ॥
अनङ्गबाणैरतिरक्ततान्तः कृते तु तेन ह्यनुमीयतेस्य॥५२॥
वैरस्यमप्यस्य तदाविरासीद्विलोकितं क्वापि न तच्छ्रुतं वा ॥
यः शैशवे सुष्ठु परेण मुष्टः स किं नु राधागमकाल ईदृक्५३॥

एवमद्भुतमभूतसात्विकभावे सति मुरारौ सर्वङ्कषामिव विषम-नायकशक्तिं विरहतापनिवर्तिकाममृत्तवर्तिमिव तामेतां आली-जनः केलीसदनमादितः प्रवेश्य त्वयमप्रविष्ट एव संघटितकपाटः सत्वरमपससार ।

दृष्ट्वा तत्र हरिं पुरः सुरगुरुं वेगाद्विवृत्ताननना
साटोपायिकपाटपाटनविधौ मोघीभवत्प्रोद्यमा ॥
राधा तत्र यथायथा भजति सा निर्बन्धमाशा तथा
गोविन्दस्य विशृङ्खला समभवच्चित्रः स्मरप्रक्रमः ॥५४॥
अपि प्रियायान्तरमर्गलं स धृत्वापि पाणिं बलवत्प्रियायाः ॥
क्षोभे हरिं विश्वसिति स्म नास्याः संपातिसंपादितकम्पसंपत्॥५५॥
क्रीडामन्दिरमादराद्रुपगतामालीजनप्रार्थन-
स्तत्रानर्किसुसंभवं यदुपतिं दृष्ट्वा विमोहाकुलाम् ॥
आकल्पस्पृहमाकलय्य मधुरैरानन्दयन्भाषितैः

---

१ नीतिमार्गात् ।

प्रेम्णा नूतनसङ्गमे नववधूं राधां हरिः पातु वः ॥५६ ॥

तथा हि ।

किमेवमालीविरहेण बाले लोलालके लुम्पासि तोषपोषम् ॥
दासोहमाज्ञावशगःकथं नु सख्या न निर्वर्तयितास्मि कृत्यम् ५७

अक्षक्रीडनतत्परा यदि भवेत्सख्या समं प्रेयसी
द्यूतं गुह्यतमं पुनस्त्रिजगति श्लाघ्यं समाकर्णय ॥
पीडासाधनमक्षषट्कमनु[1] ते साक्षी तु सोत्कण्ठता
स्तोतव्या अबलाश्च यन्न तदिदं मन्ये परानन्ददम्॥५८॥

दुष्प्राप्तोपि विधोः करः कुचयुगे तन्मे किमु स्थाप्यतां
किं वा शीतलमातनोमि सकलेष्वङ्गेषु ते स्पर्शनम् ॥
आकर्षाम्यथ वाम्बरं गृहयुतं धन्यंधमीशं कुरु -
स्पष्टोरुद्युतिचुम्बनं वद मुदा का वात्र सैवास्तु ते ॥५९॥

गुह्यं तव प्रकटयाम्यधुना सुखार्थं
कोप्यस्ति काम इति दैवतसार्वभौमः ॥
धीरोपि भीरुवशगो ललनापि याति
पुंभावमीदृशफलं तदुपासनस्य ॥ ६० ॥

अपि च तदीयमघटितघटनाकौशलमपसाधारणमवधारयतु भवती तमेनं मीनकेतनं त्रिदशमपि[2] प्रकाशितदशाविधदशं अनङ्गमपि सुतनुलोभनीयं भवविरोधिनमपि संसारसारं परित्यक्तक्षेत्रमपि सरातिं स्थाणुविरोधिनमपि तरुणोपास्यं मधुप्रणयिनमपि कृतसुरासुरवर्जनं वसन्तमित्रमपि पुष्पसमेयशरप्रहारं कुर्वाणमनन्यजमपि मनोभवं रतिभाजमपि विरतिभाजं कुसुमैकसायकमपि

---

१ इंद्रियषट्कम् । २ त्रिदशं देवम् ।

पल्लवेषु पक्षपातिनं सुमनोबाणमपि सुरताविरोधिबाणं शम्बरवित्पथमपि दानवारितया प्रसिद्धं नष्टमूर्तिमप्यनष्टमूर्तिप्रणयिनं निर्वाणकरणीभूतयोगाभिलाषजनकमपि मोक्षपरिपन्थिनं अपवर्गमिव भर्वविरोधिनं हंसमिव मानसवासिनं शिल्पिनामिव शूर्पकारितया प्रसिद्धं वैनतेयमिव सुमनसामपि दुर्लभं अमृतमातन्वानं कृतान्तमिव अयोगावलं जनयातनोत्सुकं मान्त्रिकमिव कामिनीग्राहव्याकुलितपुरुषोपास्यं दिवाकरमिव अतिरक्तरुचिविषयं हरमिव उन्मनप्रियं जीवन्मुक्तमिव निरन्तरप्रमदाश्रयं पवनमिव भोगिजीवातुं कृपणस्येव विधेरपि स्वजनाभिलाषमापादयन्तं बहुप्रजस्येव शशिनापि गुरुगृह[3]स्पृहामातन्वानं यातुधानस्येव पुरन्दरस्य तापनक्षेत्रदूषणप्रियमापादयन्तं वात्स्यायनतन्त्रसारं भगवन्तं मकरध्वजमुपासीनाः सम्पन्नप्रियावाप्तयः सकलभागाननुभवन्ति तथा च तदीयं मन्त्रमस्मिन्नेव माङ्गलिके मुहूर्ते तुभ्यमुपदेष्टुकामस्य मम किमपि वचनं प्रमाणयतु भवती ।

वामाचारैकगम्यो हि मन्त्रोयं तस्य साधने ॥
नग्नता मधुनः पानं प्रियोच्छिष्टस्य च ग्रहः ॥ ६१ ॥

इत्यादिचारुवचनैर्मधुरैर्मुरारिः
स्मेराननामधिगतोर्थतया प्रियां ताम् ॥
दृष्ट्वैव नामृतमसौ पिबति स्म किंतु
मोहादकामयत किं त्वधरामृतं सः ॥ ६२ ॥

चुचुम्ब शौरिर्वदनं प्रियाया ध्रुवं सुधां[4]दीधितिबिम्बमेतत् ॥
प्रोवाह मन्दं करधूननेन यदुज्ज्वलत्कोपि रसो मनोज्ञः ॥६३॥

---

१ शिवशत्रुमित्यर्थः । २ संसारः साम्बश्च । ३ गुरुर्बृहस्पतिः गुरुजनश्च । ४ चन्द्रबिम्बम् ।

तदनु यदुपतिः प्रेयसीबिम्बाधरपानलोलुपः कमपि चाटुवचनसिचयमरचयत् । तथा हि ।

तदधरः परिभूतसुधारसः प्रियतमे कतमेन न बुध्यते ॥
विदधति द्विजराजरुचेस्तिरस्करणमस्तु सुधाधिकता न किम् ६४
आदौ यदच्छममृतं मथने बभूव गुप्त्वा तदेव विधिना निहितं त्वदोष्ठे।
ख्यातं तदेतदधरामृतमुत्तरं तु कालुष्यभागमथितं त्रिदशैर्धृताशैः ६५

बाले तवाखिलमुखेपि विधेर्विवर्ते
रेखाधरस्य परमस्य कुतो निमृष्टाः ॥
इत्थं विशङ्क्य चिरमस्त्यधुना विशङ्कः
स्मृत्वा शिवं धृतरुचिं शशिरेखमेव ॥ ६६ ॥

सुवर्णपात्रेण जगद्गुरापाकल्याणपात्रेण.............तु ॥
अहं कियत्प्रेयसि तेधरस्य तस्यामृतस्यापि च तारतम्यम्॥६७॥
मनोहरापाङ्गि तवाधरोयं क्षौद्रस्य[1] मन्ये पटलं य एषः ॥
चिराय तिर्यग्विहितोपि कृच्छ्रं प्रायः परेणैव[2] नरेण पेयः ॥६८॥
कमलकुड्मलचारुकुचाङ्कुरे त्वदधरो द्विजराज[3] इति स्फुटम् ॥
अतिसितः स नतामृतसेकता भवति रागविशेषपदं यतः ॥६९॥
द्विजच्छस्तेधर इत्यप(?)....पि सोयं गरुडः परं भवेत् ॥
अनेन संच्छाद्य यतोमृतं नवं हरेण हार्यं हरिणैव धार्यम् ॥७०॥
प्रसारसाराक्षि तवाधरोष्ठं फलं विशङ्के पनसद्रुमस्य ॥
प्रकाशते कण्टकपालिराशौ ततश्च मृष्टं यदमुष्य भोक्तुः ॥७१॥

---

१ क्षौद्रं मधुः । २ परमेश्वरेण । ३ द्विजराजश्चन्द्रः ।

द्राक्षेव साक्षादपरस्तवायं नासत्यवाणीप्रवणो यतोहम् ॥
तापापनोदाय गदावलम्बी मुदा तदा स्वादनतत्परोहम्॥७२॥
..........द्विजगर्हितेन बिम्बीफलेनास्तु तवाधरस्य ॥
द्विजप्रधानाशुचयोधरे तु प्रवर्तयन्त्येव रुचिं स्वकीयाम् ॥७३॥
न विद्यते यत्र धरेति कृत्या प्रतीयते योधरशब्दचुम्बी ॥
प्रत्यक्षमेतन्नवखण्डसाररसाश्रयत्वं कथमस्तु मुग्धे ॥७४ ॥

तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता ॥
आप्राशस्त्यविरोधश्च नञर्थाः षट् प्रकीर्तिताः ॥७५॥

विरुध्यता चार.................................. ॥
कावापराधोस्य न स्वस्त्युवार्यः पदञ्चस्य स्वपदो विधित्सुः ७६
इति मुहुस्तुवनानवतावना न खलुहानिरिति ब्रुवता.... ॥
......कथं चन वञ्चना वचन सञ्चयमोचनचुम्बना ॥७७॥
प्रियतमाकुचमोचनभाजने कृतरुचिकमलाप्ततमस्ततः ॥
करमचालय...........सा[illegible]तामपि कंचिद्रुदञ्चितौ ॥७८॥

बाले न वेत्सि पदयोर्गतिसौकुमार्यं
उर्वोः करं द्वा[illegible] कुम्भयुगं क्रमेण ॥
क्षिप्त्वा गजः सकलमाक्रमितुं नवाङ्ग-
मत्यर्थमिच्छति हरिं शरणं भजेन्माम् ॥७९॥

तेनैव ते सम्प्रति पारवश्यं निदारयत्वेष हरिस्तवेतौ ॥
सखे न कुम्भौ यदि नो सुखं स्यात् तदाहितं ज्ञास्यति भाषितं मे८०॥

---

१ वैद्यः सत्यभाषी च । २ टिप्पणरूपी वायं श्लोको लेखकप्रमादेन मूल आगत इति गम्यते । ३ सिंहं कृष्णं च ।

त्वत्कञ्चुकाग्रयुगयोगमिषैककाण्ड-
बद्धं कुचद्वयमिदं स्मरसिद्धिकस्य ॥
पेटीयुगं यदिह मीनतुमुं कदाचि-
त्प्राप्तिः पुराप्यहह तौल्यमुपैमि बद्धः ॥८१॥

निर्वाणहेतौ भवदङ्गसीम्नि विधिप्रतिष्ठाप्यरतीशदेवे ॥
कुम्भौ निचिक्षेप सुवर्णपूर्णौ कुचस्थले नागमपारगामी ॥८२॥

कथं नु मूढाः कथयन्ति सौम्यं शैल्येन बाले कुचकुम्भयोस्ते ॥
क्षितेोभवद्भूषणमेव यत्र वक्त्रः प्रतीपाचरणे कुशङ्का ॥८३॥

अंतःपुरं रतिमिमौ हृदयेशयस्य
कामस्य गोप्तुरिव कञ्चुकिनौ स्तनौ ते ॥
दंण्डात्तयोर्हितकरौ भवतो भुजौ मे
न क्वापि दण्डरहितः किल कञ्चुकी स्यात् ॥८४॥

न्यधत्त वेधा हृदि भूषणाय कुचस्थलात् कोकयुगं तवेदम् ॥
यद्यन्न पद्मास्तकराभिमर्शः श्लिष्टस्य वेदं सुखतां प्रयायात् ॥८५॥

त्वदङ्गलावण्यझरीजिहीर्षया करद्वयेनापि विधिः कुचस्थलात् ॥
निमज्जयत्कुम्भयुगं करेण मे न वार्यते चेद्गतुलेति वक्षसे ॥ ८६ ॥

यत्कञ्चुकप्राश्वमपास्य गौरं द्रागन्यमन्यः समाददाते ॥
तद्भोगिनोस्त्वत्कुचयोर्नितान्तं का निर्वृतिः स्पर्शनमन्तरेण ॥८७॥

लावण्यसागरतया त्वयि मग्नमूर्तेः
प्राक्मेनकात्मजगिरेः शिखरे तनौ ते ॥
आद्याभयाय तदमुष्य करं ददामि
सोहं हारिः शिरसि खेदविनोदनं मे ॥ ८८ ॥

१ दण्डः यष्टिः हस्तश्च । २ चक्रवाकमिथुनम् ।

चक्रीति कोकस्य ममापि शब्दः स्वस्वामिभावं प्रकटं विधत्ते ॥
कुचस्थले चक्रयुगं करेण निषेधनिस्प्रष्टुमपीति चित्रम् ॥ ८९ ॥
मुग्धे कुचौ दुर्गकृते जिहीर्षुरस्ति स्मरस्ते तदमुष्य भीत्या ॥
गूढं गिरीशत्वमिहार्धचन्द्रं सखे न दत्वा स्फुटयामि मूर्ध्ना॥९०॥
रसालसत्वं हृदि वीक्ष्य तस्य फले कुचावाक्रमितौ स्मरेण ॥
करेण मे कण्टकवेष्टितौ तदिमौ विधेयावधुनैव मुग्धे ॥ ९१ ॥
कृशानुभाजा हृदयेशयेन योगः किलायं तव तापहेतुः ॥
ददामि सीतं हृदयेशयं मे तेनैव नूनं भवनिर्वृत्तिः स्यात् ॥९२॥

न किंचिदिच्छामि सकृत्कुचाख्यं
स्पृशामि शैलं शृणु तस्य साध्यम् ॥
एकाचलस्य ग्रहणेपि ताह-
गस्ति प्रशस्तिः कियतो द्वयोस्तु ॥ ९३ ॥

नाट्यन्विनयितां हरी एवं चाटुवादपरिपाटिपटीयान् ॥
अस्पृशत्कुचयुगं स कथंचिच्चुम[illegible]कृतचुङ्कृतिरोधात् ॥ ९४ ॥

ततश्च ।

निवेश्य तल्पे शिशि[illegible]ह यां प्राप समां समापि ॥
नीवीविमोक्षाय विमे[illegible]ङ्गजास्यं हरिराराध ॥ ९५ ॥

बाले चैलमिदं [illegible]हं धवलं पीताम्बराश्लेषतः
प्राज्यं सौख्यमपेक्षितं यदि गुणानाकर्णयास्य क्रमात् ॥
गोप्या श्रोणिकुचोऽरुणिप्रियलसन्नेत्रानुबन्धो रुचे-
रुत्कर्षत्सुकुमारताकृतसुखश्रेयांसि भूयांसि च ॥ ९६ ॥

भवद्दुकूलान्तर एव लीनं मनो ममात्रापि न दृश्यते यतः ॥
तदर्पयेदं यदि वा विमुच्य क्षौमं[2] मम प्रत्ययमातनुष्व ॥ ९७ ॥

---

१ कृतवान् । २ पट्टवस्त्रम् ।

आच्छादयिष्याम्यहमाशया ते नितम्बमेतत्त्यज किं दुकूलम् ॥
दिगम्बरत्वं किमवाप्य मुग्धे शिवं जगत्पूज्यतमं न वेत्सि ॥९८॥

रम्भाप्रकाण्डाद्द्विरदस्य शुण्डा-
दण्डादपि श्रीनिलये त्वदूरौ ॥
तिरस्क्रियामाधतोंशुकस्य
परिग्रहः किं नु शुभो विभाति ॥ ९९ ॥

इतीरयित्वा स्पृशतीव नीवींहरौ विमुक्ताशरणं कमेति ॥
अनर्थभूम्नः पदमुत्तरस्य रन्ध्रं तदा गम्ययथातिसूक्ष्मम् ॥१००॥
दुकूलमाकर्षति निर्विशङ्कं हरौ विमुक्ताशरणं कमेति ॥
दध्वानतस्याः कटकः परं तु श्रितस्य नोपेक्षणमौचितं तत् १०१॥
हृढं जवानेव कटाक्षबाणैर्हृदि न्यधत्तेव विरोधिभारम् ॥
तथास्य सा मुञ्चतु भीतवर्तिक मायी समस्ताशयवृत्तिसाक्षी१०२॥
अपि पुराबलिनिग्रहणे नये कुचस्थो वरमाक्रमितुं क्रियाम् ॥
सपदि किन्ववलेन तदार्के श्लिष्टस्यवेदं सुनयद्धरिरम्बरम् ॥३ ॥
पुनर्जिघृक्षा वसनं प्रियायां मकरद्ध्वजनापि विक्षमाधात् ॥
योगे दुरूहं कपटं यदस्य ततः प्रास्ते चेद्दल्लेतिगमाया ॥ ४ ॥
अथैष पस्पर्श नितिम्बबिम्बमनम्बरालम्बि ...रप्रियायाः ॥
भूभृद्भुवः किंनु नितम्बमस्याः स्पृशेन्न नीलोमृततः स लौल्यः ।५॥
अविषयो वचसां सुरतक्रमस्तदनु यः प्रचचाल तमेककः ॥
अविधृताङ्गतया सविधे वसन् कुसुमसायक एव सुबुध्यते ॥ ६ ॥
निंद्द्रतुस्तावथकेलिलालसौ चिराय भूत्वा बहुलश्रमालसौ ॥
ससिञ्जिनीबन्धमपि स्वधन्वनश्चकार मारं शिथिलं पृथुश्रमः ७॥

---

१ दिशा । २ शोभायुक्ते । ३ उत्सुकः । ४ सुषुप्तुः ।

कृकवाकुरुतं निशम्य तारं दयिते स्वप्स्यसि बुध्यति स्म राधा ॥
मुखरो विविधस्तुतिप्रपञ्चैः सहसा बोधकरो व्रजोप्युपादात् ॥८॥

उपगम्य च वैतालिकानिकरस्तमिदमगात् ।

उत्तिष्ठाखिललोकपालनकलानिष्णातकृष्णाधुना
दत्तामोदमुदास्थ सर्वजगतां भद्राय निद्रारसम् ॥
राधाया दयितो रुचिं विधुरसो चाज्ञापरस्यामिति
क्षुब्धोयं कमलाशयं प्रयतते भेत्तुं किलालीजनैः ॥ ९ ॥

भगवानभिव्यञ्जितार्थान्तरं वैतालिवचनमाकर्णयन् सत्वरमवबुध्य रुक्मिरोषसम्भावनयाविदारितहृदयः केलिनिकेतनान्निरगात् तथाहि ।

मुग्धे प्राज्ञमहिषीषु साम सुपरास्वाहीयमानासु वा
संप्राप्तास्वयुताधिकासु ललनास्वन्यासु मान्यासु वा ॥
जाता त्वं मधुवैरिणा[illegible]प्रेमप्रवाहास्पदं
तस्याः संप्रति [illegible]राधिका राधिका १० ॥

ततः खलु ।

मा[illegible]चटुपाटुवचःप्रपञ्चै-
र्मा भू[illegible]रितैमनाः दयितेस्य तस्य ॥
वक्त्राम्बुजं च ललितं वलितं विधेहि
मुग्धे विदग्धविधये व स च द्विधेयः ॥ ११ ॥

एवमादिभिः सखीजनभाषितैरुपजप्ता विदर्भजा निर्व्याजहृदयापि विरचितकुङ्कुमाङ्गरागाविरागा ताम्बूलरसाविरसा समुज्झि-

---

१ कुक्कुटशब्दम् । २ अस्तौद । ३ त्यक्ता । ४ भ्रमसमूहः । ५ प्रतारणायुक्तम् ।

तगन्धकुसुममाल्यलौल्या अभ्यञ्जिताञ्जनरञ्जना विमुक्तमुक्ताहारा च भूत्वा केवलमवनीतलमधिशयाना च मानमनाटयत्

अत्रान्तरे यदुपतिः प्रतिपन्नमाना-
मेनामनूनमनसामनुनेतुकामः ॥
आसेदिवान् सदनमाशुविदर्भजाया
जायामजायत कृशां विवशो हि वीक्ष्य ॥ १२ ॥

उपसृत्य च प्राणप्रियामिदमवादीत् ।

शङ्कासि किं नु दयिते कुचकुम्भसाम्य-
मुद्राव्य जम्भरिपुकुञ्जरकुम्भयुग्मे[1] ॥
भित्त्वा तदेव कुचयो रचयामि हारं
प्राप्तेन मौक्तिकगणेन मम प्रसीद ॥ १३ ॥

प्राणप्रिये किमिव वस्तु तवास्त्यपेक्ष्य-
मीदृङ्मनःकलुषता यदलाभतस्ते ॥
लोलासि बालविभ्व कुचस्थ[illegible]ने चे-
दापादयामि [illegible]क्लिष्टस्त्वेदं सु[illegible] ॥ १४ ॥
किं पारिजातमुपनीत[illegible]थनापि वि[illegible]
भामाकृते कलुषितासि म[illegible]ते चेद्गलोतिग
कल्पद्रुमं सपदि सद्म नयामि [illegible]रामि
सोयं सुरूपकरनिर्जरपल्लवस्ते ॥ १५ ॥
प्राणादपि प्रियतमामतिलङ्घ्य भर्म्यां
त्वामन्यमुभ्रु विरुचिर्मम चेत्प्रमादात् ॥
स्पृश्यत्कलङ्कवदनद्विजराट्प्रसाद-
मुन्मुच्यते कथमिवाहमथाच्युतस्था ॥ १६ ॥

---

१ जम्भरिपुरैरावतः ।

प्राणप्रिया ऋतुमती न समागमार्हा
तिस्रो निशा इति विलीनविलासजालः ॥
स्वेदं प्रपद्य हृदयस्य विनोदमात्र-
मासादयन् सह कयापि विधेयया ते ॥ १७ ॥

मञ्जीरमञ्जुतरसिञ्जित रञ्जितं ते
पादाम्बुजं प्रियतमे कलयामि मूर्ध्ना ॥
आधेहि मुग्धमधुरं वदनेन्दुबिम्ब-
मेकान्तकान्तममितस्मितचन्द्रिकाभिः ॥ १८ ॥

एवं सकपटशपथपरम्परया प्रशंसया विनयाभिनयेन च प्रेयसीमनुनीय सोन्नमनुमुत्सङ्गसङ्गिनीमाधायपांसुनिरसनेन शिरोहसंहननेन कण्ठाश्लेषेण कपोलपरिचुम्बनेन च प्रमोदमापाद्य यदुनन्दनः कमपि वचनाविष [illegible] भजत ।

इत्थं मानुषली [illegible] नीं पावनीं
कल्याणैव [illegible] नन्दाय कन्दायते ॥
देवाय [illegible] भुवनं गोपाय गोपायते
लक्ष्मीचित्र [illegible] वामृतझरीकल्पाय कल्पायते ॥१९॥

तस्यै विदर्भसुदृशे जगदम्बिकायै
गोपालकाय च जगज्जनकाय तस्मै ॥
कल्याणजालमतिवेलमनल्पकाल-
माशास्महे न हि ततोधिकमर्थयामः ॥ २० ॥

---

१ पालनकर्त्रे ।

ममेदं मेदिन्या मुदितममृतासारसरसं
गभीरं जानीयात् क इव रसिकाग्रे सर इति ॥
कृतानन्ताचिन्ता कथमिव मयाहन्त जनके
दयासर्वस्वज्ञे सति भवति निर्मत्सरतरे ॥ २१ ॥
नवेकालिदासकवितांम्बुधे रसा-
दुपरिप्लवाय विहिता मया तरी ॥
अवलम्ब्य चेदयमिमाविगाह्यते-
किमलभ्यमत्र गुणरत्नमस्तु वः ॥ २२ ॥
श्वशुरगृहनिवासः स्वर्गतुल्यो जनाना-
मिति मुधमधुरं यः सार्थयन् पूर्वगाथाम् ॥
निमिषमपि न हातुं दृष्टिदुग्धाब्धिसम-
श्रियमयमिनिनम्रः श्रीपतिर्नस्तनोतु ॥ २३ ॥
यस्मिन् शङ्करदारसौरभझरीजृम्भत्कटाक्षच्छटा-
पाताः कल्पलताविं[illegible]मनोगुम्फप्रियंभावुकाः ॥
तस्यासौ नव[illegible]य कुचस्थ[illegible]ने[illegible]ः षष्ठोपि काव्यामृते
चम्पूनामनि ध[illegible]श्लिष्टस्तेदं सु[illegible]॥ विलासोऽगमत॥२४॥
[illegible]यनापि वि[illegible]

इति श्रीमद्भागवतच[illegible] [illegible]लिदासकृते काव्ये विलासो नाम [illegible]कः ॥ ६ ॥

समाप्तेयं चम्पूः ।

---

१ अयं टीकाकारश्लोको लेखप्रमादान्मूले आगतः ।

समाप्ता टिप्पणी ।

---

मुद्रितमेतन्मुम्बय्यां गोपाळनारायणजनतया स्वकीये मुद्रालये ।